## (चतुर्विधस्नानम्)

आग्नेयं वारुणं स्नानं [१६]ब्राह्मं वायव्यमेव च ।
सारस्वतमिति प्रोक्तं प्रातःस्नानं चतुर्विधम् ॥ ११८ ॥

आग्नेयं भस्मना स्नानं मृद्भिर्वारुणमुच्यते ।
आपो हिष्ठामयं ब्राह्मं मन्त्रस्नानं तु तत्स्मृतम् ॥ ११९ ॥

आपोहिष्ठेति तिसृभिः मन्त्रस्नानं विधीयते ।
भूमौ मूर्ध्नि तथाकाशे मूर्ध्न्याकाशे तथा भुवि ॥ १२० ॥

आकाशे भुवि मूर्ध्नि स्यान्मन्त्रस्नानमुदाहृतम् ।
गात्रं सप्रणवैः पादैः मार्जयेत विचक्षणः ॥ १२१ ॥

ततो ऋग्भिश्च तिसृभिः सर्वाङ्गं मार्जयेद् बुधः ।
वायव्यं गोरजोभिस्तु गङ्गास्नानसमं स्मृतम् ॥ १२२ ॥

जलस्नानं कलौ प्रोक्तं सर्वाघौघविनाशनम् ।
अत्यशक्तस्तु गात्रं तु शोधयित्वाऽऽर्द्रवस्त्रतः ॥ १२३ ॥

शुद्धवस्त्रं परीधाय गायत्र्या मन्त्रिता अपः ।
प्रोक्षयित्वात्मगात्रेषु धृत्वा द्वादशपुण्ड्रकम् ॥ १२४ ॥

कृत्वा सन्ध्यादिकं कर्म सोऽपि स्नानफलं लभेत् ।
अन्यथा नरकं याति यावदिन्द्राश्चतुर्दश ॥ १२५ ॥

उष्णोदकेन वा स्नायाद् अशक्तस्तु बहिर्जले ।
तदशक्तस्तु कावेर्याः माहात्म्यं शृणुयान्नरः ॥ १२६ ॥

---

१६. ब्रह्मवाय्वमेव च

(जलाकरभेदेन स्नाने फलभेदः)

उत्तमं तु नदीस्नानं मध्यमं तु तटाकिनाम् ।
अधमं वापिकूपं तु भाण्डस्नानं वृथावृथा ॥ १२७ ॥

गृहे द्वारमुखे स्नानं सरस्यां सन्मुखो भवेत् ।
वापीकूपतटाकेषु स्नानं भास्करसम्मुखम् ॥ १२८ ॥

नद्यस्समुद्रगाः काश्चित् तासु स्नानं प्रशस्यते ।
त्रिरात्रयज्ञफलदाः पृथक्सागरगास्तथा ।
यच्छन्ति पक्षसवनं फलं [१७]स्नानपरस्य ताः ॥ १२९ ॥

सागरो माससवनफलदः सरितां पतिः ।
गोदा षण्माससवनफलदा च सरस्वती ॥ १३० ॥

वसन्तयागफलदा कालिन्दी गोसवप्रदा ।
जाह्नवी वत्सराख्यस्य यज्ञस्य फलदा मता ॥ १३१ ॥

पद्माकारं रथक्रान्तसवनस्य फलप्रदम् ।
यथा सङ्क्रान्तफलदं देवखातमुनीश्वराः ॥ १३२ ॥

सौत्रामण्यङ्गफलदं तटाकं पल्वलं तथा ।
बहिर्वाप्योऽप्यवभृतफलदाः परिकीर्तिताः ॥ १३३ ॥

तत्र स्नानफलं प्रोक्तं माघे कोटिगुणं भवेत् ।
माघस्नानं प्रयागे तु प्रशंसन्ति मनीषिणः ॥ १३४ ॥

---

१७. स्तावसन्त या

तुलास्नानं तु कावेर्यां प्रशस्तमिति मे मतिः ।
मेषस्नानं तु रेवायां गयायां कर्कटे तथा ।
स्नानान्येतानि शस्तानि प्रातःस्नानेषु नारद ॥ १३५ ॥

(नदीतारतम्यम्)

**वशिष्ठः**

शृणु राजन् महाभाग नदीनामन्तरान्तरम् ।
वक्ष्यामि विस्तरेणैव समाहितमनाः शृणु ॥ १३६ ॥

हरिपादाब्जसम्भूता गङ्गा सर्वार्थदायनी ।
सा हि श्रेष्ठा नदीनां वै ततो गोदावरी वरा ॥ १३७ ॥

गोदावरी तु गङ्गायाः पञ्चाशद् गुणनीचगा ।
कृष्णवेणी ततो नीचा सहस्रगुणनीचगा ॥ १३८ ॥

सरस्वती ततो नीचा कृष्णवेण्याः शताधमा ।
कलिन्दस्य कुमारी स्यादेतासां त्रिगुणाधिका ॥ १३९ ॥

कलिन्दकन्यकायास्तु नर्मदा त्रिगुणाधमा ।
तुङ्गभद्रा महाराज कावेर्या त्रिगुणाधमा ॥ १४० ॥

एतत्समा महाभाग सिन्धुस्तु भवनाशनी ।
सर्वाधिकवरं लेभे नारसिंही महात्मनः ॥ १४१ ॥

कुमुद्वती नृपश्रेष्ठ नारसिंह्याः शताधमा ।
मञ्जुला भीमरथी चैव ताम्रपर्णी मलापहा ॥ १४२ ॥

नारसिंहसुतायास्तु द्विगुणोना मता नृप ।
पिनाकिनी महापुण्या भीमरथ्याः समा मता ॥ १४३ ॥

पृथक्सागरगामिन्यः सर्वतो मुनिपुङ्गव ।
नद्यश्चैता समा ज्ञेयाः नात्र कार्या विचारणा ॥ १४४ ॥

पुष्करिण्यश्च याः सर्वाः एतासां त्रिगुणाधमाः ।
स्वामिपुष्करणीनां चन्द्रपुष्करणी तथा ॥ १४५ ॥

मानसं च महाभाग कृष्णवेणीसमा मता ।
अन्यानि देवखातानि पुष्करिण्यश्च मानद ॥ १४६ ॥

अवराणि च चन्द्राया गुणानां शततस्तु वै ।
याश्चान्या सरितो राजन् देवखाताच्छताधमाः ॥ १४७ ॥

सरितो नृपतिश्रेष्ठ तटाकं द्विगुणाधमम् ।
तारतम्यं नृपश्रेष्ठ नदीनां तु मया तव ।
सर्वमुक्तं समासेन किमन्यच्छ्रोतुमिच्छसि ॥ १४८ ॥

(गङ्गादिनद्यां ध्येयाः भगवन्मूर्तयः)

गङ्गायां माधवो देवः शङ्खचक्रगदाधरः ।
गोदावर्यां महानद्यां वीरनारायणो हरिः ॥ १४९ ॥

शङ्खचक्रगदापद्मैः शोभितो ध्येय ईश्वरः ।
कृष्णवेण्यां नृपश्रेष्ठ कृष्णः साक्षाज्जनार्दनः ॥ १५० ॥

चतुर्बाहुर्महातेजाश्शङ्खचक्रासिशार्ङ्गभृत् ।
सरस्वत्यां महाभाग पद्मनाभं स्मरेन्नृप ॥ १५१ ॥

कावेर्यां रङ्गनाथं च सरय्वां राममेव च ।
नर्मदायां महाविष्णुः चतुर्बाहुर्नृपोत्तम ॥ १५२ ॥

वराहं तुङ्गभद्रायां सिन्धौ क्षीराब्धिशायिनम् ।
नृसिंहं भवनाशिन्यां कुमद्वत्यां त्रिविक्रमम् ॥ १५३ ॥

मञ्जुलायां हयग्रीवं भीमरथ्यां तु श्रीधरम् ।
अनन्तं ताम्रपर्ण्यां वै मलाहार्यां जनार्दनम् ॥ १५४ ॥

पिनाकिन्यां महाभाग केशवं क्लेशनाशनम् ।
पद्मशङ्खारिसंयुक्तं गदापरिघशोभितम् ॥ १५५ ॥

पृथक्सागरगामिन्यो याः [१८]नद्यः सन्ति भूतले ।
तासु सर्वासु राजेन्द्र केशवादींश्च संस्मरेत् ॥ १५६ ॥

सरोवरेषु राजेन्द्र दत्तात्रेयं स्मरेत् सदा ।
स्वामिपुष्करणीतीर्थे श्रीभूमिसहितं शुभम् ॥ १५७ ॥

कटिन्यस्तं वामबाहुं वरदेन करेण च ।
युक्तं शङ्खादिसंयुक्तं प्रसन्नाधोक्षजं स्मरेत् ॥ १५८ ॥

वामनं संस्मरेद् राजन् चन्द्रपुष्करणीतटे ।
संस्मरेन्नृपतिश्रेष्ठ मानसे मधुसूदनम् ॥ १५९ ॥

देवखातेषु राजेन्द्र लक्ष्मीनारायणं स्मरेत् ।
तटाके संस्मरेद्राजन् शेषशायिनमच्युतम् ॥ १६० ॥

---

१८. नद्या सति भूतले

वापीषु संस्मरेद्राजन् चक्रपाणिं चतुर्भुजम् ।
एवमादिहरेर्मूर्तिः सदा स्नानपरीप्सुकैः ।
स्मर्तव्याः सततं वत्स नात्र कार्या विचारणा ॥ १६१ ॥

(नदीस्तोत्रम्)

नदीस्तोत्रं प्रवक्ष्यामि सर्वपापप्रणाशनम् ।
भागीरथी वारणासी यमुना या सरस्वती ॥ १६२ ॥

फल्गुनी शोणभद्रा च नर्मदा गण्डकी तथा ।
मणिकर्णिका गोमती प्रयागश्च पुनः पुनः ॥ १६३ ॥

गोदावरी सिन्धुनदी सरयू मञ्जुला तथा ।
कृष्णवेणी भीमरथी काकिनी भवनाशनी ॥ १६४ ॥

तुङ्गभद्रा मलाहारी वरदा या कुमुद्वती ।
कावेरी कपिला कुन्ती हिमावति हरिद्रुती ॥ १६५ ॥

नेत्रावती वेगवती गायत्री जाह्नवी तथा ।
माहेश्वरी धर्ममाता इन्द्राणी अग्निनी तथा ॥ १६६ ॥

नन्दिनी नलिनी सीता मालती च मलापहा ।
सम्भूतवैष्णवा वेणी त्रिपदा भोगवती तथा ॥ १६७ ॥

कौमोदकी कुरुक्षेत्रे गोविन्दे द्वारकी तथा ।
नन्दिनी तपती काळी कालिन्दी गणपती तथा ॥ १६८ ॥

कमण्डलुधनुष्कोटी कपिनी गौमती तथा ।
ताम्रपर्णी स्वर्णमुखी पिनाकी गहरी तथा ॥ १६९ ॥

भारद्वाजेति विख्यातं नदीस्तोत्रं तथैव च ।
प्रातः काले पठेन्नित्यं स्नानकाले विशेषतः ॥ १७० ॥

कोटिजन्मकृतं पापं स्मरणेन विनश्यति ।
ब्रह्महत्यादिसर्वेषु महापातकनाशनम् ॥ १७१ ॥

अत्यन्तमलिनः कायः नवद्वारसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातःस्नानेन शुद्ध्यति ॥ १७२ ॥

प्रातः काले समुत्थाय मम कीर्तनतत्परः ।
स्नानं करोति राजेन्द्र स गच्छेद् वै सुरालयम् ।
याम्यं तु नारकं घोरं नित्यस्नायी न पश्यति ॥ १७३ ॥

(नित्यस्नानफलम्)

नित्यस्नानेन शुद्धात्मा प्रयाति सुरमन्दिरम् ।
प्रातःस्नायी हरेद् भूप स बाह्याभ्यन्तरं मलम् ॥ १७४ ॥

मध्याह्ने वापि राजेन्द्र स गच्छेद् वै सुरालयम् ।
सौभाग्यं स्त्रीसुखं पुष्टिं पुण्यं विद्यायशोधृतिम् ॥ १७५ ॥

[१९]महापापान्यलक्ष्मीं च दुःस्वप्नं दुर्विचिन्तनम् ।
शोकदुःखार्तिहरणं प्रातःस्नानं तु कार्तिके ॥ १७६ ॥

स्नानमूलाः क्रियास्सर्वाः स्नानहीनाः क्रियाः वृथा ।
तस्मात् स्नानं प्रयत्नेन सदा कार्यं मनीषिभिः ॥ १७७ ॥

---

१९. महात्वापान्त्यलक्ष्मी

(माघादिमासभेदेन स्नाने फलविशेषः)

सर्वेषामपि धर्माणां स्नानमाद्यं विदुर्बुधाः ।
विना स्नानं कृतं कर्म गजभुक्तकपित्थवत् ॥ १७८ ॥

तत्रापि प्रातर्यःस्नायाद् विष्णुभक्तिपरायणः ।
न तस्मिन् पापलेशोऽस्ति कृतघ्ने सुकृतं यथा ॥ १७९ ॥

शौचं स्नानं द्वयं मातापितरौ सर्वकर्मणि ।
ततः स्नानं प्रकुर्वीत नद्यादौ सजितेन्द्रियः ॥ १८० ॥

नानाविधानि स्तोत्राणि [२०]पठन् गच्छेज्जलाशयम् ।
नमस्कुर्यात् तु कावेरीं पुष्पाञ्जलिपुरःसरः ॥ १८१ ॥

सङ्कल्प्य विधिवत्पश्चात् सवासाः जलमाविशेत् ।
तीर्थं प्रकल्पयेद् विद्वान् मन्त्रेणानेन मन्त्रवित् ।
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ॥ १८२ ॥

(स्नाने हरिस्तवनं नद्यभिमानिदेवतास्तवनं च)

समस्तजगदाधार शङ्खचक्रगदाधर ।
देव देहि ममानुज्ञां युष्मत्तीर्थनिषेवणे ॥ १८३ ॥

यन्नखाग्रसमुद्भूता गङ्गा त्रैलोक्यपावनी ।
यत्पादे सर्वतीर्थानि माधवं तं नमाम्यहम् ॥ १८४ ॥

योऽसौ तीर्थपदो विष्णुः चिद्रूपी परमेश्वरः ।
स एव द्रवरूपेण वसत्येव जलाशये ॥ १८५ ॥

---

२०. पठनाच्छेज्जला

यस्य केशेषु जीमूताः नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्रास्सर्वे ते तस्मै तोयात्मने नमः ॥ १८६ ॥

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहम् ॥ १८७ ॥

यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥१८८॥

त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ।
याचितं तीर्थं मे देहि सर्वपापैः प्रमुच्यते ॥ १८९ ॥

सितासिते यत्र तरङ्गचामरे मध्ये विभाते मुनिभानुकन्यके ।
लीलातपत्रं वट एव साक्षात् स तीर्थराजो जयति प्रयागः ॥१९०॥

अश्वत्थस्य जले यत्र छाया भवति कुत्रचित् ।
तत्प्रयागसमं तीर्थं तत्र सन्निहितो हरिः ॥ १९१ ॥

सञ्चिन्तयेद् भगवतश्चरणारविन्दं
वज्रांकुशाध्वजसरोरुहलाञ्छनाढ्यम् ।
उत्तुङ्गरक्तविलसन्नखचक्रवाल-
ज्योत्स्नाभिराहतमहद् हृदयान्धकारम् ॥ १९२ ॥

हरिरोमिति निर्दिश्य यत्कर्म क्रियते बुधैः ।
अधीयते वा देवर्षे तद्धि वीर्योत्तरं भवेत् ॥ १९३ ॥

तस्मात्तु प्रातरुत्थाय प्राङ्मुखो नियतः शुचिः ।
हरिर्हरिर्हरिरिति व्याहरेद्दोषशान्तये ॥ १९४ ॥

स्नानादिषु च कार्येषु क्षुतप्रस्खलनादिषु ।
हरिरित्युच्यतेऽत्युच्चैर्हरत्यस्याशुभं हरिः ॥ १९५ ॥

गङ्गां गत्वा शनैर्विप्रो नमस्कृत्य हरिं स्मरन् ।
प्रक्षाल्य पादौ हस्तौ च आचम्य प्रयतः शुचिः ॥ १९६ ॥

अतितीक्ष्णेन मन्त्रेण चानुज्ञातोऽथ भैरवात् ।
कटिप्रमाणमुदकं गत्वा स्नानं समाचरेत् ॥ १९७ ॥

'अतितीक्ष्ण महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यम् अनुज्ञां दातुमर्हसि ' ॥ १९८ ॥

गङ्गाद्याः सरितः सर्वाः यस्मिन् कस्मिञ्जलाशये ।
संस्मरेत् स्नानकाले तु सद्यः सन्निहिताः सदा ॥ १९९ ॥

नन्दिनी नलिनी सीता मालती च मलापहा ।
विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ॥ २०० ॥

भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी ।
द्वादशैतानि नामानि यत्र यत्र जलाशये ॥ २०१ ॥

स्नानकाले पठेन्नित्यं तत्र सन्निहिता तु सा ।
'याः प्रवते' ति मन्त्रेण 'इमं म' इति मन्त्रतः ॥ २०२ ॥

गङ्गे च यमुने चैव गोदावरी सरस्वती ।
नर्मदे सिन्धुकावेरी जलेऽस्मिन् सन्निधिं कुरु ।
नदीस्ताः प्रार्थयित्वैवं देवायार्घ्यं निवेदयेत् ॥ २०३ ॥

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोऽस्तु ते ॥ २०४ ॥

माघस्नानं करिष्यामि मकरस्थे दिवाकरे ।
आसमाप्ति महादेव निर्विघ्नं कुरु माधव ॥ २०५ ॥

माघमासि महादेव व्रतस्थोऽहं जगत्पते ।
ग्रहाणार्घ्यं मया दत्तं माधवाद्य प्रसीद मे ॥ २०६ ॥

मधुसूदन देवेश वैशाखे मेषगे रवौ ।
प्रातःस्नानं करिष्यामि निर्विघ्नं कुरु माधव ॥ २०७ ॥

वैशाखे मेषगे भानौ प्रातः स्नानपरायणः ।
अर्घ्यं तेऽहं प्रदास्यामि गृहाण मधुसूदन ॥ २०८ ॥

देवदेवारविन्दाक्ष करिष्ये कार्तिकव्रतम् ।
निर्विघ्नं कुरु देवेश दामोदर नमोऽस्तु ते ॥ २०९ ॥

कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ।
ग्रहाणार्घ्यं मया दत्तं दामोदर मया सह ॥ २१० ॥

'समुद्रज्येष्ठ'मन्त्रेण 'इमं म' इति मन्त्रतः ।
रत्नाकराय देवाय दद्यादर्घ्यं यथाविधि ॥ २११ ॥

एहि सूर्य सहस्रांशो तेजोराशिन् जगत्पते ।
अनुकम्पय मां भक्त्या ग्रहाणार्घ्यं नमोऽस्तु ते ॥ २१२ ॥

विष्णुपादाब्जसम्भूते गङ्गे त्रिपथगामिनि ।
ग्रहाणार्घ्यं मया दत्तं जले सन्निहिता भव ॥ २१३ ॥

वृद्धगङ्गे महापुण्ये गौतमस्याघनाशनी ।
गोदावरि ग्रहाणार्घ्यं त्रियम्बकजटोद्भवे ॥ २१४ ॥

कलिन्दशैलतनये पृथक्सागरगामिनी ।
ग्रहाणार्घ्यं मया दत्तं यमुने फलदा भव ॥ २१५ ॥

देवमानससम्भूते सरस्वत्यघनाशनी ।
ग्रहाणार्घ्यं मया दत्तं पृथक्सागरगामिनी ॥ २१६ ॥

दत्तात्रेय नमस्तुभ्यं सह्यामलकमूलग ।
ग्रहाणार्घ्यं मया दत्तं योगासनसमाश्रित ॥ २१७ ॥

सह्यपादोद्भवा देवी श्रीरङ्गोत्सङ्गगामिनी ।
कावेरीति सुविख्याते ग्रहाणार्घ्यं नमोस्तु ते ॥ २१८ ॥

नमः करालवदने नमस्ते कलिनाशनी ।
नमस्ते देवि कावेरी ग्रहाणार्घ्यं नमोस्तु ते ॥ २१९ ॥

गङ्गाद्याः सरितः सर्वाः तीर्थानि जलदानि च ।
प्रतिगृह्य मया दत्तम् अर्घ्यं सम्यक् प्रसीदथ ॥ २२० ॥

ब्रह्माद्याः देवताः सर्वाः ऋषयो ये च वैष्णवाः ।
ते गृह्णन्तु मया दत्तम् अर्घ्यं सम्यक् प्रसीदथ ॥ २२१ ॥

ऋषभः पापिनां शास्ता [२१]त्वं यमः समदर्शनः ।
ग्रहाणार्घ्यं मया दत्तं यथोक्तफलदो भव ॥ २२२ ॥

२१. त्वायमः

अन्या नदीः समुद्दिश्य दद्यादर्घ्यं यथाविधि ।
पृथक्सागरगामिन्यां नद्यां स्नानपरो नरः ।
विना गङ्गां विना गोदां नदीमन्यां न कीर्तयेत् ॥ २२३ ॥

चन्द्रपुष्करणीस्नानं सर्वपापप्रणाशनम् ।
नद्यां स्नात्वा नदीमन्यां न प्रशंसेत कर्हिचित् ॥ २२४ ॥

श्रीरङ्गतीर्थमित्येतद्वाच्यं सर्वत्र नारद ।
न तेन दोषमाप्नोति महापुण्यमवाप्नुयात् ॥ २२५ ॥

अन्यत्रापि प्रदेशेषु यत्र यत्र जलाशये ।
चन्द्रपुष्करणीयुक्तां स्नात्वा तस्यार्थभाग्भवेत् ॥ २२६ ॥

[२२]रङ्गपादोद्भवा देवि पुन्नागोत्सङ्गगामिनी ।
चन्द्रपुष्करणी ख्याते ग्रहाणार्घ्यं नमोऽस्तु ते ।
इत्यर्घ्याणि प्रदत्वाथ मलस्नानं समाचरेत् ॥ २२७ ॥

(स्नानाङ्गार्घ्यप्रदानम्)

स्नाने दाने जपे होमे स्वाध्याये चार्चने तथा ।
शिखाग्रन्थिं विना कुर्यात् शूद्र एव न संशयः ॥ २२८ ॥

भोजने शयने सङ्गे तारामार्गपरिग्रहे ।
व्यवहारे तथा शौचे शिखाग्रन्थिं विसर्जयेत् ॥ २२९ ॥

प्राणाहुतिं गृहीत्वा तु शिखाग्रन्थिं समुत्सृजेत् ।
करशुद्धिं ततः कृत्वा पश्चाद् ग्रन्थिं तु धारयेत् ॥ २३० ॥

---

२२. रम्यपादो

यत्किञ्चित् क्रियते कर्म वैदिकं तान्त्रिकं तथा।
कटिसूत्रेण यः कुर्यात् सद्यः शूद्रो भवेद् द्विजः ॥ २३१ ॥

कार्पासं कटिसूत्रं च राजतं हैममेव च।
रात्रौ भोजनकालेषु स्त्रीसङ्गे मातृवद्भवेत् ॥ २३२ ॥

तिलकं ब्रह्मसूत्रं च स्नानमाचमनीयकम्।
कटिसूत्रेण यः कुर्यात् सद्यः शूद्रो भवेद् द्विजः ॥ २३३ ॥

अर्चने वन्दने श्राद्धे स्नानकाले सुरार्चने।
कट्यां वै धारयेद् वस्त्रं वर्जयेदाश्वलायनः ॥ २३४ ॥

स्नानकाले तु देवस्य पूजाकाले तथैव च।
होमभोजनयोः काले सदनुज्ञां प्रयाचयेत् ॥ २३५ ॥

सप्तवारं निमृज्याद्भिः करसम्पुटयोर्धृतिः।
मूर्ध्नि कृत्वाऽञ्जलिं भूयः त्रिचतुःपञ्च सप्तधा।
स्नानं कुर्यान्मृदा तद्वन्मन्त्रतस्तु विधानतः ॥ २३६ ॥

(सदाचारस्मृतिः)

**उद्धृतेति मृदाऽऽलिप्य द्विषडष्टषडक्षरैः।**
**त्रिर्निमज्ज्याप्यसूक्तेन प्रोक्षयित्वा पुनस्ततः।**
**मृदाऽलिप्य निमज्य त्रिस्त्रिर्जपेदघमर्षणम् ॥ ३ ॥**

**स्रष्टारं सर्वलोकानां स्मृत्वा नारायणं परम्।**
**यतःश्वासो निमग्नोऽप्सु प्रणवेनोत्थितः पुनः।**
**सिञ्चेत्पुरुषसूक्तेन स्वदेहस्थं हरिं स्मरन् ॥ ४ ॥**

त्रिर्निमज्याथ सम्प्रोक्ष्य सूक्तै वरुणदेवतैः ।
तुलस्यश्वत्थधात्रीणां मृत्स्नया मूलजातया ॥ २३७ ॥

तथैव तिलपिष्टेन स्नानं कुर्यादतन्द्रितः ।
सङ्कल्प्य विधिवत्पश्चान्मृत्तिकागोमयादिभिः ॥ २३८ ॥

तिलपिष्टेन धात्र्या च पिष्टेनाङ्गं विलेपयेत् ।
त्रिर्निमज्य च पश्चात्तु जपेदुन्मृज्य च द्विजः ॥ २३९ ॥

त्रिर्जप्त्वा 'चाघमर्षं' प्रणवेनोत्थितस्ततः ।
सिञ्चयेच्च स्वदेहं च जप्त्वा 'पुरुषसूक्तकम्' ॥ २४० ॥

आदाय तुलसीमूलमृदं तत्पत्रसंयुताम् ।
मूलमन्त्रेणाभिमन्त्र्य [२३]गायत्र्या वा महामते ॥ २४१ ॥

मन्त्रेणैवानुलिप्ताङ्गः स्नायादप्स्वघमर्षणम् ।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥ २४२ ॥

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ॥ २४३ ॥

मृतिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिते ।
त्वया हतेन पापेन गच्छामि परमां गतिम् ॥ २४४ ॥

अङ्गादङ्गात् लोम्नो लोम्नो जातं पर्वणि पर्वणि ।
यक्ष्मन् सर्वस्मादात्मनस्तमिमं विवृहामि ते ॥ २४५ ॥

---

२३. गायन्त्या

गन्धद्वारां धुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ २४६ ॥

तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः ।
तिलस्नानादसह्यं मे पापं नाशय केशव ॥ २४७ ॥

पुत्रं देहि यशः प्राज्ञे यशो देहि निरन्तरम् ।
प्रज्ञां मेधां च सौभाग्यं विष्णुभक्तिं च देहि मे ॥ २४८ ॥

निरोगं कुरु मां नित्यं निष्पापं कुरु सर्वदा ।
सर्वज्ञं कुरु मां देवी धनवन्तं तथा कुरु ॥ २४९ ॥

आपो वा इद९ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापः स्वराडापः छन्दा९स्यापः ज्योती९ष्यापो यजू९ष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवसुवरापः अमृतमापः सम्राडापो विराडापः ॥

पितॄन् गुरून् तथा देवानुद्दिश्य स्नानमाचरेत् ।
वैय्याघ्रपादगोत्राय साङ्कृतिप्रवराय च ।
अपुत्राय ददाम्येततत्सलिलं भीष्मवर्मणे ॥ २५० ॥

ततोऽघमर्षणस्नानं कृत्वा सम्प्रोक्षयेज्जलैः ।
पौरुषेयेण सूक्तेन देवर्षिपितृतर्पणम् ।
दत्वोत्सृजेत् शिखास्कन्धजलं दक्षिणपाश्र्वतः ॥ २५१ ॥

**ऋतं चेति मन्त्रस्य अघमर्षणऋषिः । भाववृतो देवता । अनुष्टुप् छन्दः ।**
**पापपुरुषविसर्जने विनियोगः ।**

ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद् विश्वस्य मिषतो वशी ॥

सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ (ऋ.सं. १०.१२.४०)

हिरण्यवर्णा शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।
अग्निꣳ या गर्भं दधिरे विरूपास्ता न आप : शꣳस्योना भवन्तु ॥

यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् ॥
मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳस्योना भवन्तु ॥

यासाꣳ देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
याः पृथिवीं पयसो दन्ति शुक्रास्ता न आपः शꣳस्योना भवन्तु ॥

*(हस्ते जलं गृहीत्वा)*

शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे ।
सर्वाꣳ अग्निꣳरप्सुषदो हुवेवो मयि वर्चो बलमोजो निधत्त ॥

*(तज्जलं नासिकयाघ्राय)*

द्रुपदादिव मुञ्चन्तु ॥ *(इत्युक्त्वा तज्जलं विसृजेत्)*

*(पुनर्जलं हस्तेनादाय)*

द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव ।
पूतं पवित्रेणैवाज्यम् । आपः शुन्धन्तु मैनसः ।

*(पुनराघ्राय विसृजेत्)*

ततोऽघमर्षणं कुर्याद्भक्तिभावेन केशवे ।
जपन्नालोड्य तत्तोयम् अष्टार्घेण च भूमिप ॥ २५२ ॥

(स्नानानन्तरं सालग्रामतीर्थं शिरसि धार्यम्)

सालिग्रामशिलावारि शिरसा धारयेत्ततः ।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
सालिग्रामशिलातोयैः योऽभिषेकं चरेन्नरः ॥ २५३ ॥

गङ्गाप्रयागगयपुष्करनैमिषाणि
संसेवितानि बहुशः कुरुजाङ्गलानि ।
कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥ २५४ ॥

त्रिरात्रफलदा नद्यः याः काश्चित् [२४]असमद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥ २५५ ॥

षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
विष्णुपादोदकस्यैताः कलां नार्हन्ति षोडशीम् ॥ २५६ ॥

जलात्पश्चाद् विनिस्तीर्य तर्पयेद् देवताऋषीन् ।
पितॄंस्ततः शिखास्कन्धे दक्षिणे तु न्यसेत्ततः ॥ २५७ ॥

(यक्ष्मतर्पणम् शिखोदकदानं च)

यन्मया दुष्कृतं तोयं शारीरमलसंयुतम् ।
तस्य पापविशुध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥ २५८ ॥

मार्जयन्ति शिरो ये तु न विसृष्ट्वा शिखोदकम् ।
असृक्पाने महाघोरे नरके ते पतन्त्विति ॥ २५९ ॥

---

२४. समुद्रगाः

शिखोदकं भूपतितं पिबन्ति पितरोऽखिलाः ।
तस्मात् शिखोदकं दद्यात् पितॄणां तृप्तिहेतवे ॥ २६० ॥

त एव पितरो लोके भूमिदेवाः प्रकीर्तिताः ।
निष्पीड्य धृत्वा वस्त्रं तु द्विराचम्य ततो नृप ॥ २६१ ॥

न कुर्यादार्द्रवस्त्रेण शिरसोद्वर्तनं तदा ।
धारयेद् धौतवस्त्रं तु नारायणमनुस्मरन् ॥ २६२ ॥

ये के चास्मत्कुले जाता अपुत्रा गोत्रजा मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ २६३ ॥

पश्चाद् वस्त्रं परीधाय पीडयित्वाऽर्द्रवस्त्रकम् ।
वामप्रकोष्ठे निक्षिप्य सम्यगाचम्य वारिणा ॥ २६४ ॥

भूमौ निक्षिप्य पश्चात्तु मन्त्ररत्नेन प्रोक्षयेत् ।
धौतवस्त्रेण संमृज्य शिरः प्रावृत्य वाससा ॥ २६५ ॥

शुद्धवस्त्रं परीधाय सम्यगाचम्य वाग्यतः ।
ईषद्धौतं स्त्रिया धौतं मलिनं चार्द्रवस्त्रकम् ।
सन्धितं च तथा धृत्वा कृतकर्मविनाशकृत् ॥ २६६ ॥

(कालभेदेन वस्त्रशुद्धिक्रमः)

कार्पासमेकरात्रं तु दशरात्रं तु पट्टजम् ।
दशाली सप्तरात्रं तु आविकन्तु सदा शुचिः ॥ २६७ ॥

होमदेवार्चसन्ध्यासु क्रियासु घटने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजो वाऽचमने जपे ॥ २६८ ॥

क्रव्यादं जात्यपभ्रष्टं नाभिदेशे व्यवस्थितम् ।
एकवस्त्रं च तं विद्याद् दैवे पित्र्ये च कर्मणि ॥ २६९ ॥

आर्द्रवासा जले कुर्यात्तर्पणाचमने जपम् ।
शुष्कवस्त्रः स्थले कुर्यात्तर्पणाचमने जपम् ।
जानुमात्रजले तिष्ठन्नासीनः प्राङ्मुखः स्थले ॥ २७० ॥

(सदाचारस्मृतिः)

**वसित्वा वास आचम्य प्रोक्ष्याचम्य च मन्त्रतः ।**
**गायत्र्या चाञ्जलिं दत्वा ध्यात्वा सूर्यगतं हरिम् ॥ ५ ॥**

आर्द्रवस्त्रेण यो मोहाश्छिर उद्धर्तयेद् द्विजः ।
तस्य पूर्वार्जितं पुण्यं तत्क्षणादेव नश्यति ॥ २७१ ॥

ज्ञानतोऽज्ञानतो वापि तिष्ठन्नुद्धर्तयेच्छिरः ।
तस्य पूर्वार्जितं पुण्यं तत्क्षणादेव नश्यति ॥ २७२ ॥

आर्द्रवस्त्रं च निष्पीड्य त्रिवारं परिशुष्य च ।
वस्त्रमष्टगुणं कृत्वा शिर उद्धर्तयेद् द्विजः ॥ २७३ ॥

यो वस्त्रप्रावृतो मोहात्पादमुद्धरते द्विजः ।
पुनः स्नानं प्रकुर्वीत अन्यथा नरकं व्रजेत् ॥ २७४ ॥

यो वस्त्रप्रावृतो मोहादार्द्रवस्त्रं भुवि क्षिपेत् ।
बाहुमूलेऽथ मूर्ध्नि पुनःस्नानं समाचरेत् ॥ २७५ ॥

वस्त्रं पावृत्त्य शिरसि वस्त्रमन्यद् विधारयेत् ।
आर्द्रवस्त्रं च निष्पीड्य प्रोक्षाचम्य भुवि क्षिपेत् ॥ २७६ ॥

विना वस्त्रेण यो स्नायात् मोहाल्लोभात्तथापि वा ।
नाशमायान्ति पुण्यानि स पिशाचो भवेन्नरः ॥ २७७ ॥

(ऊर्ध्वपुण्ड्रधारणक्रमः)

ऊर्ध्वपुण्ड्राणि चाचम्य सन्ध्याकर्म समाचरेत् ।
वामहस्ते जलं क्षिप्त्वा गायत्र्या चाभिमन्त्रितम् ॥ २७८ ॥

'अतो देवे'ति मन्त्रेण मर्दयेद्गोपिचन्दनम् ।
विष्णोरित्यभिमन्त्रेण ऊर्ध्वपुण्ड्रं तु धारयेत् ॥ २७९ ॥

विमलां मृत्तिकां रम्यामादाय द्विजसत्तम ।
मन्त्रेणैवाभिमन्त्र्याथ ललाटादिषु वैष्णवः ।
धारयेदूर्ध्वपुण्ड्राणि यथासङ्ख्यमतन्द्रितः ॥ २८० ॥

ब्रह्मन् द्वादशपुण्ड्राणाणि ब्राह्मणः सततं धरेत् ।
चत्वारि भूभृतां पुत्र पुण्ड्राणि द्वे विशां स्मृते ।
एकपुण्ड्रं तु नारीणां शूद्राणां च विधीयते ॥ २८१ ॥

ललाटे उदरे चैव वक्षो वै कण्ठकूबरे ।
कुक्षौ बाह्वोः कन्धरे च पार्श्वपृष्ठे तथैव च ॥ २८२ ॥

ककुद्द्वादशमं प्रोक्तं ब्राह्मणस्य सदानघ ।
ललाटे हृदि बाह्वोश्च क्षत्रः पुण्ड्राणि धारयेत् ।
ललाटे हृदये वैश्यो फाले वै शूद्रयोषितः ॥ २८३ ॥

(ऊर्ध्वपुण्ड्रधारणस्थले ध्येयविष्णुरूपाणि)

ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षस्थले माधवं च गोविन्दं कण्ठकूबरे ॥ २८४ ॥

विष्णुं च दक्षिणे कुक्षौ बाह्वोश्च मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके ॥ २८५ ॥

श्रीधरं वामके बाहौ हृषीकेशं तु कन्धरे ।
पृष्ठे तु पद्मनाभं च ककुद्दामोदरं न्यसेत् ॥ २८६ ॥

तत्प्रक्षालनतोयेन वासुदेवं च मूर्धनी ।
एवं कार्यं ब्राह्मणस्य क्षत्रियस्योपधारय ॥ २८७ ॥

ललाटे केशवं ध्यायेद् हृदये माधवं तथा ।
बाह्वोरुभयतो वत्स स्मरेद्वै मधुसूदनम् ॥ २८८ ॥

क्षत्रियस्य विधिः प्रोक्तो वैश्यकृत्यं [२५]निशामय ।
ललाटे केशवं ध्यायेद् हृदये माधवः स्मृतः ॥ २८९ ॥

योषिच्छूद्रः स्मरेद्देवं केशवं फालदेशके ।
अनेन विधिना कुर्यात् पुण्ड्राणि मम तुष्टये ॥ २९० ॥

श्यामं शान्तकरं प्रोक्तं [२६]रक्तं वश्यकरं तथा ।
श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभम् ॥ २९१ ॥

एकान्तिनो महाभागाः सर्वभूतहिते रताः ।
सान्तरालं प्रकुर्वीत पुण्ड्रं हरिपदाकृतिम् ॥ २९२ ॥

मध्यं च्छिद्रेण संयुक्तं तच्छिद्रं हरिमन्दिरम् ।
ऊर्ध्वपुण्ड्रं ऋजुं सौम्यं सुपार्श्वं सुमनोहरम् ॥ २९३ ॥

---

२५. निरामयः २६. क्तवत्रयं

निरन्तराळं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।
स हि तत्र स्थितं लक्ष्म्या सह मां च व्यपोहति ॥ २९४ ॥

अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजाधमाः ।
तेषां ललाटे सततं शुनः पादो न संशयः ॥ २९५ ॥

तस्माच्छिद्रान्वितं पुण्ड्रं तमच्छिद्रसमन्वितम् ।
धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये ॥ २९६ ॥

**(ब्रह्मनारायणसंवादेनोर्ध्वपुण्ड्रधारणसमर्थनम्)**

**ब्रह्मोवाच**

पुण्ड्रं कतिविधं धार्यं प्रब्रूहि मम केशव ।
पुण्ड्राणां श्रवणेऽतीव कौतुकं मम जायते ॥ २९७ ॥

**॥ श्रीभगवानुवाच ॥**

श्रुणु वत्स प्रवक्ष्यामि पुण्ड्रं च त्रिविधं मतम् ।
तुलसीमृत्स्नया सार्धं श्रीगोपीचन्दनेन च ॥ २९८ ॥

हरिचन्दनेन तत्कार्यं तत्र तत्र विचक्षणैः ।
गोपीचन्दनमाहात्म्यं निबोध गदतो गम ॥ २९९ ॥

श्रीकृष्णतुलसीमूलं मृदमादाय भक्तिमान् ।
धारयेदूर्ध्वपुण्ड्राणि विष्णुस्तस्य प्रसीदति ॥ ३०० ॥

यो मृत्तिकां द्वारवतीसमुद्भवां
करे समादाय ललाटमध्ये ।
करोति नित्यं पुरुषोर्ध्वपुण्ड्रं
क्रियाफलं कोटिगुणं सदा भवेत् ॥ ३०१ ॥

विष्णुं च दक्षिणे कुक्षौ बाह्वोश्च मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके ॥ २८५ ॥

श्रीधरं वामके बाहौ हृषीकेशं तु कन्धरे ।
पृष्ठे तु पद्मनाभं च ककुद्दामोदरं न्यसेत् ॥ २८६ ॥

तत्प्रक्षालनतोयेन वासुदेवं च मूर्धनी ।
एवं कार्यं ब्राह्मणस्य क्षत्रियस्योपधारय ॥ २८७ ॥

ललाटे केशवं ध्यायेद् हृदये माधवं तथा ।
बाह्वोरुभयतो वत्स स्मरेद्वै मधुसूदनम् ॥ २८८ ॥

क्षत्रियस्य विधिः प्रोक्तो वैश्यकृत्यं [२५]निशामय ।
ललाटे केशवं ध्यायेद् हृदये माधवः स्मृतः ॥ २८९ ॥

योषिच्छूद्रः स्मरेद्देवं केशवं फालदेशके ।
अनेन विधिना कुर्यात् पुण्ड्राणि मम तुष्टये ॥ २९० ॥

श्यामं शान्तकरं प्रोक्तं [२६]रक्तं वश्यकरं तथा ।
श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभम् ॥ २९१ ॥

एकान्तिनो महाभागाः सर्वभूतहिते रताः ।
सान्तरालं प्रकुर्वीत पुण्ड्रं हरिपदाकृतिम् ॥ २९२ ॥

मध्यं च्छिद्रेण संयुक्तं तच्छिद्रं हरिमन्दिरम् ।
ऊर्ध्वपुण्ड्रं ऋजुं सौम्यं सुपार्श्वं सुमनोहरम् ॥ २९३ ॥

---

२५. निरामयः २६. रक्तवत्रयं

निरन्तराळं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।
स हि तत्र स्थितं लक्ष्म्या सह मां च व्यपोहति ॥ २९४ ॥

अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजाधमाः ।
तेषां ललाटे सततं शुनः पादो न संशयः ॥ २९५ ॥

तस्माच्छिद्रान्वितं पुण्ड्रं तमच्छिद्रसमन्वितम् ।
धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये ॥ २९६ ॥

(ब्रह्मनारायणसंवादेनोर्ध्वपुण्ड्रधारणसमर्थनम्)

ब्रह्मोवाच

पुण्ड्रं कतिविधं धार्यं प्रब्रूहि मम केशव ।
पुण्ड्राणां श्रवणेऽतीव कौतुकं मम जायते ॥ २९७ ॥

॥ श्रीभगवानुवाच ॥

शृणु वत्स प्रवक्ष्यामि पुण्ड्रं च त्रिविधं मतम् ।
तुलसीमृत्स्नया सार्धं श्रीगोपीचन्दनेन च ॥ २९८ ॥

हरिचन्दनेन तत्कार्यं तत्र तत्र विचक्षणैः ।
गोपीचन्दनमाहात्म्यं निबोध गदतो गम ॥ २९९ ॥

श्रीकृष्णतुलसीमूलं मृदमादाय भक्तिमान् ।
धारयेदूर्ध्वपुण्ड्राणि विष्णुस्तस्य प्रसीदति ॥ ३०० ॥

यो मृत्तिकां द्वारवतीसमुद्भवां
करे समादाय ललाटमध्ये ।
करोति नित्यं पुरुषोर्ध्वपुण्ड्रं
क्रियाफलं कोटिगुणं सदा भवेत् ॥ ३०१ ॥

क्रियाविहीनं यदि मन्त्रहीनं
श्रद्धाविहीनं यदि कालवर्ज़ितम् ॥
धृत्वा ललाटे यदि गोपिचन्दनं
प्राप्नोति सत्कर्मफलं सदाऽव्ययम् ॥ ३०२ ॥

गोपीचन्दनसम्भवं सुरुचिरं पुण्ड्रं ललाटे द्विजो
नित्यं धारयते प्रतिदिनं रात्रौ सदा सर्वदा ।
यः पुण्यं कुरुजाङ्गले वृजिनहे माध्यां प्रयागे तथा
तत्प्राप्नोति ततोऽधिकं मम गृहे सन्तिष्ठते दैववत् ॥ ३०३ ॥

यस्मिन् गृहे तिष्ठति गोपिचन्दनं
भक्त्या ललाटे मनुजो बिभर्ति ।
तस्मिन् गृहेऽहं निवसामि सर्वदा
श्रियान्वितः कंसनिषूदनो हरिः ॥ ३०४ ॥

यो धारयेद् द्वारवतीसमुद्भवं
सदा पवित्रं कलिकल्मषापहम् ।
नित्यं ललाटे मम मन्त्रसंयुतं
यमं न पश्येदपि पापसंवृतः ॥ ३०५ ॥

यस्यायुकाले सुत गोपिचन्दनं
बाह्वोर्ललाटे हृदि मस्तके वा ।
प्रयाति लोकं कमलापतेर्मम
गोबालघाती यदि ब्रह्महा स्यात् ॥ ३०६ ॥

ग्रहा न पीडन्ति न रक्षसाङ्गणाः
यक्षः पिशाचोरगभूतदानवाः ।
ललाटपट्टे सुत गोपिचन्दनं
सन्तिष्ठते यस्य मम प्रसादात् ॥ ३०७ ॥

ऊर्ध्वपुण्ड्रं ऋजुं सौम्यं ललाटे यदि दृश्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥ ३०८ ॥

अस्नातो यः क्रियां कुर्यादशुचिः पापसंयुतः ।
गोपीचन्दनसम्पर्कात् पूतो भवति तत्क्षणात् ॥ ३०९ ॥

अशुचिर्वाप्यनाचारो महापापं समाचरेत् ।
शुचिरेव भवेन्नित्यम् ऊर्ध्वपुण्ड्राङ्कितो नरः ॥ ३१० ॥

मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुरानन ।
मत्पूजाहोमकाले च सायं प्रातः समाहितः ॥ ३११ ॥

मद्भक्तो धारयेन्नित्यं ऊर्ध्वपुण्ड्रं भयापहम् ।
ऊर्ध्वपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित् ।
श्वपाकोऽपि विमानस्थो मम लोके महीयते ॥ ३१२ ॥

ऊर्ध्वपुण्ड्रधरो मर्त्यो गृहे यस्यान्नमश्नुते ।
तदा विंशत्कुलं तस्य नरकादुद्धराम्यहम् ॥ ३१३ ॥

वीक्ष्यादर्शे जले वापि यो विदध्यात् प्रयत्नतः ।
ऊर्ध्वपुण्ड्रं महाभाग स याति परमां गतिम् ॥ ३१४ ॥

(ऊर्ध्वपुण्ड्रधारणे तर्जन्यादिभेदेन फलभेदः)

अनामिका शान्तिदोक्ता मध्यमायुष्करी भवेत् ।
[२७]अङ्गुष्ठं पुष्टिदं प्रोक्तं तर्जनी मोक्षसाधनी ॥ ३१५ ॥

गोपीचन्दनखण्डं तु यो ददाति हि वैष्णवे ।
कुलमष्टोत्तरं तेन भवेद् वै तारितं शतम् ॥ ३१६ ॥

यज्ञो दानं तपो होमस्स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वं ऊर्ध्वपुण्ड्रं विना कृतम् ।
तद् द्रष्टव्यं नैव तावत् स्मशानसदृशं भवेत् ॥ ३१७ ॥

ऊर्ध्वपुण्ड्रं तु यः कुर्यादिवं भक्त्या चतुर्मुख ।
सर्वपापाद् विनिर्मुक्तः त्रिदशैरभिवन्द्यते ॥ ३१८ ॥

ऊर्ध्वपुण्ड्रं तु यः कृत्वा मत्स्यकूर्मादिधारणम् ।
कुर्याद्विष्णुप्रसादार्थं महाविष्णोरतिप्रियः ॥ ३१९ ॥

यः पुनः कलिकाले तु मत्पुरी[२८]सम्भवां मृदम् ।
मत्स्यकूर्माङ्कितं चिह्नं गृहीत्वा कुरुते नरः ॥ ३२० ॥

देहे विष्णुं प्रविष्टं मां जानीहि त्रिदशोत्तम ।
तस्य मे नान्तरं किञ्चित्कर्तव्यं श्रेय इच्छता ॥ ३२१ ॥

ममावतारचिह्नानि दृश्यते यस्य विग्रहे ।
मर्त्यो मर्त्यो न विज्ञेयः स नूनं मामकीतनुः ।
पापं सुकृतरूपं तु जायते तस्य देहिनः ॥ ३२२ ॥

---

२७. अमुष्य पुष्यदं २८. सभवामृद

(ऊर्ध्वपुण्ड्रधारणे तर्जन्यादिभेदेन फलभेदः)

पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ।
गोमत्या द्वारकायाश्च मृत्सुपुण्यप्रदा मम ॥ ३२३ ॥

सिन्धुतीरे च वल्मीके तुलसीमूलमृत्तिका ।
एताः मृदः सदा कुर्याद् वर्जयेदन्यमृत्तिकाः ॥ ३२४ ॥

(ऊर्ध्वपुण्ड्रलक्षणम्)

वर्तिदीपाकृतिं वापि वेणुपत्राकृतिं तथा ।
पद्मस्य कुड्मलाकारं कुमुदस्य यथा भवेत् ॥ ३२५ ॥

मत्स्यकूर्माकृतिं वापि शङ्खाकारमतः परम् ।
दशाङ्गुलप्रमाणं तु उत्तमं परिचक्षते ॥ ३२६ ॥

नवाङ्गुलं मध्यमाहुरष्टाङ्गुलमतः परम् ।
अधमं सप्तषट्कं च पुण्ड्राकारं यथाविधि ॥ ३२७ ॥

बाह्वोर्दशांङ्गुलं प्रोक्तं नवाष्टौ हृदयं भवेत् ।
नाभौ तु सप्त षट्कं च फाले नासादिकेशतः ।
नासादिमूलमारभ्य केशान्तं तिलकं भवेत् ॥ ३२८ ॥

न तद्ध्यानं न तद्दानं [२९]न तपो नार्चनं तथा ।
ऊर्ध्वपुण्ड्रविहीनैस्तु विप्रैर्यद्यदनुष्ठितम् ॥ ३२९ ॥

दण्डाकारं ललाटे तु पद्माकारन्तु वक्षसि ।
वेणुपत्राकृतिर्बाह्वोरन्यां दीपाकृतिं न्यसेत् ॥ ३३० ॥

---

२९. नतेमोनार्चनं

(मुद्राधारणक्रमः)

मुद्राधारं प्रवक्ष्यामि यथा तु क्रम उच्यते ।
तत्क्रमात् धारयेद् विप्रो विष्णुलोकं प्रपद्यते ॥ ३३१ ॥

उदरे त्रीणि चक्राणि अधः शङ्खं तु धारयेत् ।
ऊर्ध्वं धार्यं पद्ममेकं नारायणचतुष्टयम् ॥ ३३२ ॥

द्वे चक्रे दक्षिणे बाहौ शङ्खमेकं तथा बहिः ।
द्वे शङ्खे वामबाहौ तु चक्रमेकं तथा बहिः ॥ ३३३ ॥

मध्ये गदाद्वयं धार्यं नारायणचतुष्टयम् ।
ललाटे तु गदा धार्या मूर्ध्नि चापशरौ तथा ॥ ३३४ ॥

तन्मध्ये चक्रपद्मं तु धारयेत् पञ्च मुद्रिकाः ।
कण्ठे कुक्षौ द्वयं धार्यम् एकमेकं कपोलयोः ॥ ३३५ ॥

दक्षिणे तु सहस्रारं वामे शङ्खं हरिप्रिये ।
कपोलोदरपृष्ठे तु ककुन्मूर्ध्नि विशेषतः ॥ ३३६ ॥

एतेषु पञ्चस्थानेषु मम मुद्राणि धारयेत् ।
ममायुधानि दृश्यन्ते लिखितानि कलौ युगे ॥ ३३७ ॥

उभाभ्यामपि बाहुभ्यां योऽङ्कितो [३०]मत्स्यमुद्रया ।
[३१]कूर्मेणापि स्वकं तेजो निक्षिप्तं तस्य विग्रहे ॥ ३३८ ॥

शङ्खं च पद्मं च गदां रथाङ्गं मत्स्यं च कूर्मं रचितं स्वदेहे ।
करोति नित्यं सुकृतस्य वृद्धिं पापक्षयं जन्मशतार्जितस्य ॥ ३३९ ॥

३०. मत्स्यमुद्रिका ३१. कूर्माणि

नारायणायुधैर्नित्यं चिह्नितं यस्य विग्रहम् ।
पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः ॥ ३४० ॥

शङ्खोद्धारे तु यत्प्रोक्तं वसतां वर्षकोटिभिः ।
तत्फलं लिखिते शङ्खे प्रत्यहं दक्षिणे भुजे ॥ ३४१ ॥

यत्फलं पुष्करे नित्यं पुण्डरीकाक्षदर्शनात् ।
शङ्खोपरिकृते पद्मे तत्फलं कोटिसम्मितम् ॥ ३४२ ॥

वामे भुजे गदा यस्य [32]लिखिता दृश्यतेऽञ्जसा ।
गदाधरो गदापुण्यं प्रत्यहं तस्य यच्छति ॥ ३४३ ॥

यदानन्दपुरे प्रोक्तं चक्रं स्वामिसमीपतः ।
गदाधोलिखिते चक्रे तत्फलं कृष्णदर्शनम् ॥ ३४४ ॥

ममायुधाङ्कितं देहं गोपीचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ॥ ३४५ ॥

यदा यदा प्रपश्येऽहं देहं शङ्खादिचिह्नितम् ।
तदा तदा प्रसन्नोऽहं पापं तस्य दहाम्यहम् ॥ ३४६ ॥

भवन्ति यस्य देहे तु अहोरात्रं दिने दिने ।
शङ्खचक्रगदापद्मं लिखितं [33]सो मदंशकः ॥ ३४७ ॥

नारायणायुधैर्युक्तं कृत्वात्मानं कलौ युगे ।
पुण्यकर्माणि कुरुते मेरुतुल्यान्यसंशयः ॥ ३४८ ॥

---

३२. लिखिता दृश्यतेजसा        ३३. सौमदंशकः

(मुद्राधारणक्रमः)

मुद्राधारं प्रवक्ष्यामि यथा तु क्रम उच्यते ।
तत्क्रमात् धारयेद् विप्रो विष्णुलोकं प्रपद्यते ॥ ३३१ ॥

उदरे त्रीणि चक्राणि अधः शङ्खं तु धारयेत् ।
ऊर्ध्वं धार्यं पद्ममेकं नारायणचतुष्टयम् ॥ ३३२ ॥

द्वे चक्रे दक्षिणे बाहौ शङ्खमेकं तथा बहिः ।
द्वे शङ्खे वामबाहौ तु चक्रमेकं तथा बहिः ॥ ३३३ ॥

मध्ये गदाद्वयं धार्यं नारायणचतुष्टयम् ।
ललाटे तु गदा धार्या मूर्ध्नि चापशरौ तथा ॥ ३३४ ॥

तन्मध्ये चक्रपद्मं तु धारयेत् पञ्च मुद्रिकाः ।
कण्ठे कुक्षौ द्वयं धार्यम् एकमेकं कपोलयोः ॥ ३३५ ॥

दक्षिणे तु सहस्रारं वामे शङ्खं हरिप्रिये ।
कपोलोदरपृष्ठे तु ककुन्मूर्ध्नि विशेषतः ॥ ३३६ ॥

एतेषु पञ्चस्थानेषु मम मुद्राणि धारयेत् ।
ममायुधानि दृश्यन्ते लिखितानि कलौ युगे ॥ ३३७ ॥

उभाभ्यामपि बाहुभ्यां योऽङ्कितो [३०]मत्स्यमुद्रया ।
[३१]कूर्मेणापि स्वकं तेजो निक्षिप्तं तस्य विग्रहे ॥ ३३८ ॥

शङ्खं च पद्मं च गदां रथाङ्गं मत्स्यं च कूर्मं रचितं स्वदेहे ।
करोति नित्यं सुकृतस्य वृद्धिं पापक्षयं जन्मशतार्जितस्य ॥ ३३९ ॥

३०. मत्स्यमुद्रिका ३१. कूर्माणि

नारायणायुधैर्नित्यं चिह्नितं यस्य विग्रहम् ।
पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः ॥ ३४० ॥

शङ्खोद्धारे तु यत्प्रोक्तं वसतां वर्षकोटिभिः ।
तत्फलं लिखिते शङ्खे प्रत्यहं दक्षिणे भुजे ॥ ३४१ ॥

यत्फलं पुष्करे नित्यं पुण्डरीकाक्षरदर्शनात् ।
शङ्खोपरिकृते पद्मे तत्फलं कोटिसम्मितम् ॥ ३४२ ॥

वामे भुजे गदा यस्य [३२]लिखिता दृश्यतेऽञ्जसा ।
गदाधरो गदापुण्यं प्रत्यहं तस्य यच्छति ॥ ३४३ ॥

यदानन्दपुरे प्रोक्तं चक्रं स्वामिसमीपतः ।
गदाधोलिखिते चक्रे तत्फलं कृष्णदर्शनम् ॥ ३४४ ॥

ममायुधाङ्कितं देहं गोपीचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ॥ ३४५ ॥

यदा यदा प्रपश्येऽहं देहं शङ्खादिचिह्नितम् ।
तदा तदा प्रसन्नोऽहं पापं तस्य दहाम्यहम् ॥ ३४६ ॥

भवन्ति यस्य देहे तु अहोरात्रं दिने दिने ।
शङ्खचक्रगदापद्मं लिखितं [३३]सो मदंशकः ॥ ३४७ ॥

नारायणायुधैर्युक्तं कृत्वात्मानं कलौ युगे ।
पुण्यकर्माणि कुरुते मेरुतुल्यान्यसंशयः ॥ ३४८ ॥

३२. लिखिता दृश्यतेजसा ३३. सौमदंशकः

शङ्खायुधाङ्कितो भक्त्या श्राद्धं यः कुरुते सुत ।
विधिहीनं तु सम्पूर्णं पितॄणां दत्तमक्षयम् ॥ ३४९ ॥

यथाग्निर्दहते कक्षं वायुना प्रेरितो भृशम् ।
तथा दहति पापानि दृष्ट्वा मे आयुधानि च ॥ ३५० ॥

मम नामाङ्किता मुद्रा अष्टाक्षरसमन्विता ।
शङ्खायुधादिकैर्युक्ता स्वर्णरौप्यमयापि वा ॥ ३५१ ॥

धत्ते भागवतो यस्तु कलिकालविशेषतः ।
प्रह्लादस्य समो ज्ञेयो नान्यथा मम वल्लभः ॥ ३५२ ॥

यस्मान्नारायणीमुद्रा देहं शङ्खादिचिह्नितम् ।
शङ्खाङ्किततनुर्विप्रो भुङ्क्ते वै यस्य वेश्मनि ।
तदन्नं स्वयमश्नाति पितृभिः सह पुत्रक ॥ ३५३ ॥

कृष्णायुधाङ्कितं दृष्ट्वा सन्मानं न करोति यः ।
द्वादशाब्दार्जितं पुण्यं बाष्कलेयापगच्छति ॥ ३५४ ॥

कृष्णायुधाङ्कितो यस्तु स्मशाने म्रियते यदि ।
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य मानद ॥ ३५५ ॥

ममायुधैः कलौ नित्यं मण्डितं यस्य विग्रहम् ।
तत्राश्रमं प्रकुर्वन्ति विबुधा वासवादयः ॥ ३५६ ॥

यः करोति च मे पूजां मम [३४]शस्त्राङ्कितो नरः ।
अपराधसहस्राणि नित्यं तस्य हराम्यहम् ॥ ३५७ ॥

३४. शास्त्रं किं ते

कृत्वा काष्टमयं बिम्बं मम शास्त्रैः सुनिश्चितम् ।
यो वा अङ्कयते देहं तत्समो नास्ति वैष्णवः ॥ ३५८ ॥

अष्टाक्षराङ्कितामुद्रा यस्य धातुमयी करे ।
शङ्खचक्रादिभिर्युक्ता पूज्यतेऽसौ सुरासुरैः ॥ ३५९ ॥

धृता नारायणीमुद्रा प्रह्लादेन करे पुरा ।
विभीषणेन बलिना ध्रुवेण जनकेन च ॥ ३६० ॥

मान्धात्रा ह्यम्बरीषेण मार्कण्डेयमुखैर्द्विजैः ।
शङ्खादिचिह्नितो शस्त्रैः देहं कृत्वा च पुत्रक ।
एवमाराध्य मां प्राप्तं [३५]समी(हि)तफलं महत् ॥ ३६१ ॥

गोपीचन्दनमृत्स्ना या लिखिता यस्य विग्रहे ।
शङ्खचक्रादिपद्मान्ताः देहे तस्य वसाम्यहम् ॥ ३६२ ॥

सौवर्णं रजतं ताम्रं [३६]कांस्यमायसमेव च ।
चक्रं कृत्वा तु मेधावी धारयेत्तु विचक्षणः ॥ ३६३ ॥

द्वादशारं तु षट्कोणं वलीत्रयविभूषितम् ।
एवं सुदर्शनं चक्रं धारयेत विचक्षणः ॥ ३६४ ॥

उपवीतादिवद्धार्या शङ्खचक्रगदादयः ।
ब्राह्मणो वै विशेषेण वैष्णवश्च विशेषतः ॥ ३६५ ॥

उपवीतं शिखा यद्वच्चक्रलाञ्छनसंयुतम् ।
चक्रलाञ्छनहीनस्य विप्रस्य विफलं भवेत् ॥ ३६६ ॥

---

३५. समीतफलम् ३६. कांशमायस्यमेव च

मम चक्राङ्कितं देहं पवित्रमिति वै श्रुतिः ।
चक्राङ्किताय दातव्यं हव्यं कव्यं विचक्षणैः ॥ ३६७ ॥

मम चक्राङ्ककवचम् अभेद्यं देवदानवैः ।
अजेयः सर्वभूतानां शत्रूणां रक्षसामपि ॥ ३६८ ॥

मम चक्राङ्ककवचं शरीरे यस्य तिष्ठति ।
नाशुभं विद्यते तस्य गृहे पुत्रादिकस्य हि ॥ ३६९ ॥

दक्षिणे च भुजे विप्रो बिभृयाद् वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति वेदविदो विदुः ॥ ३७० ॥

तत्तन्मत्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक्पृथक् ।
ललाटे तु गदा धार्या मूर्ध्नि चापं शरं तथा ।
नन्दकं चैव हृन्मध्ये शङ्खचक्रे भुजे द्वये ॥ ३७१ ॥

**(गोपीचन्दनमुद्राधारणविषये धरणीवराहसंवादकथनम्)**

**धरण्युवाच**

मुद्राणां धारणं देव कथं कार्यं वदस्व तत् ।
येन स्यात् वैष्णवो मर्त्यो यत्त्यागात् स्यादवैष्णवः ॥ ३७२ ॥

**श्रीवराहः -**

मुद्राणां धारणं देवि द्विविधं परिकीर्तितम् ।
तापयित्वा मृदा चैव ब्राह्मणस्य विशेषतः ।
आषाढे कार्तिके मासे मौञ्जीबन्धविधौ यथा ॥ ३७३ ॥

द्वादशेऽहनि विप्रस्य नामकर्मदिने तथा ।
महागुरुसमाजे च धारये(त्) तत्र मुद्रिकाम् ॥ ३७४ ॥

विधिनाऽग्निं प्रतिष्ठाप्य सहस्रं व्याहृतिं जुहुः* ।
ॐ ह्रां ह्रीं ह्रूं नमश्चक्राय स्वाहेत्यष्टोत्तरं शतम् ॥ ३७५ ॥

शङ्खाय नमः स्वाहेत्यपि वाऽष्टोत्तरं शतम् ।
घृतेन जुहुयादेवं चक्रहोम इतीरितः ॥ ३७६ ॥

ततश्च स्विष्टकृद्धोमं विधाय गुरुतस्ततः ।
तदभावेऽपि सर्वेऽपि कस्यचिन्महतोऽपि वा ॥ ३७७ ॥

धारयेत्तप्तचक्रं च दक्षिणे बाहुमूलके ।
स्तने च जठरे चैव ततः शङ्खं तु सव्यतः ॥ ३७८ ॥

भुजमूले स्तने चैव धारये(त्) पञ्चमुद्रिकाः ।
चक्रशङ्खे द्वयोर्बाह्वोरथवा धारयेद् बुधः ॥ ३७९ ॥

स्त्रियो बालाश्च संस्कार्यास्ततः कर्माणि कारयेत् ।
यथा स्मशानजं काष्टं गर्हितं सर्वकर्मसु ।
अतप्तशङ्खचक्राङ्गं तथा गर्हितमुच्यते ॥ ३८० ॥

नारी वा पुरुषो वाऽपि ब्राह्मणः क्षत्रियोऽपि वा ।
वेदवेदाङ्गवेत्ताऽपि सर्वकर्मसु गर्हितः ।
यदि [३७]चक्रं भुजे तस्य तप्तशङ्खं न चैव हि ॥ ३८१ ॥

प्रायश्चित्तेन चीर्णेन यथोक्तविधिनापि वा ।
निष्कृतिर्नैव पापस्य यावच्चक्रं न धारयेत् ॥ ३८२ ॥

---

३७. चक्राम्बुजे

* 'जुहुयुः' इति पाठः साधुः ।

तस्मात्स्वशुद्धिकामेन मत्प्रीतिमपि वाञ्छता ।
मदीयत्वज्ञापनाय धारयेत्तप्तचक्रकम् ॥ ३८३ ॥

मम चक्राङ्कितं दृष्ट्वा युक्तं पापैरनेकशः ।
यमदूता न स्पृशन्ति तप्ताङ्गारमिवापरम् ॥ ३८४ ॥

मम चक्राङ्कितनुः विद्यते यत्र कुत्रचित् ।
प्रयागे या गतिः प्रोक्ता सा गतिः तस्य देहिनः ॥ ३८५ ॥

महापापयुतो वाऽपि मृतो भुक्त्वाऽल्पकालतः ।
फलं पापस्य यान्त्येव मम लोकं सनातनम् ॥ ३८६ ॥

मृदा वै धारणं कुर्यात् प्रत्यहं स्नानतः परम् ।
सर्वायुधानि चाङ्गेषु तिलकानां तथोपरि ॥ ३८७ ॥

विधिं तस्य प्रवक्ष्यामि शृणुष्वावहिते धरे ।
आचम्य प्राणानायम्य तिलकायुधधारणम् ॥ ३८८ ॥

करिष्य इति सङ्कल्प्य वामहस्ते जलं क्षिपेत् ।
गायत्र्या वाथ मूलेन मन्त्रयित्वा प्रयत्नतः ॥ ३८९ ॥

गृहीत्वा द्वारकां मृत्स्नाम् अथवा [३८]पुण्यतीर्थजाम् ।
मृत्तिके धारयिष्यामि भक्त्या त्वां केशवप्रियाम् ॥ ३९० ॥

त्वया स्पृष्टो गमिष्यामि विष्णुलोकं सनातनम् ।
इति तां प्रार्थयित्वा तु मन्त्रपूते जले क्षिपेत् ॥ ३९१ ॥

---

३८. पुण्यतीर्थगाम्

'स्योना पृथिवी'ति मन्त्रेण गायत्र्या वा समाहितः ।
अथ मूलेन मन्त्रेण मर्दितां तां मृदं पुनः ॥ ३९२ ॥

गायत्र्यामूलमन्त्रेभ्यो दशकृत्वस्त्रिरेव वा ।
मन्त्रयित्वा ततो भक्त्या तिलकान् धारयेत् सुधीः ॥ ३९३ ॥

द्विषट्चतुर्द्वयं सङ्ख्या विप्राद्याः बिभृयुः क्रमात् ।
ललाटमध्योदरहृद्गलेषु पार्श्वे भुजे कर्णमूले च दक्षे ॥ ३९४ ॥

तद्वद् वामे पृष्टमध्ये च मूर्ध्नि
शुक्ले न्यसेत् केशवादीनि तेषु ।
सङ्कर्षणादीन्यथवा कृष्णपक्षे
नामानि विष्णोः ब्राह्मणो द्वादशैव ॥ ३९५ ॥

ललाटहृद्बाहुषु क्षत्रजातो वैश्यो ललाटे हृदये च शूद्रः ।
ललाट एवैकमथात्र नामान्युक्तक्रमेणैवमथात्र विन्यसेत् ॥३९६॥

(मुद्राप्रार्थनप्रकारः)

नारायणायुधाद्याश्च मुद्राः सम्प्रार्थयेत्ततः ।
सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥ ३९७ ॥

पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय ।
पाहि मां पापिनं घोरं संसारार्णवपातिनम् ॥ ३९८ ॥

संसारभयभीतानां योगिनाम् अभयप्रद ॥
पद्महस्तस्थितो विष्णुः पाहि मां सर्वतो भयात् ॥ ३९९ ॥

दैत्यशोणितदिग्धाङ्गे कौमोदकि गदे हरेः ।
छिन्दि भिन्दि तमोऽन्तस्थं त्वां नमामि पुनः पुनः ॥ ४०० ॥

नाममुद्रे नमस्तुभ्यं त्वदङ्किततनुं हरेः ।
प्रसादाद् विष्णुलोकेऽहं स्थिरं स्थास्यामि निर्वृतः ॥ ४०१ ॥

नमो नन्दक दैत्यानां शिरश्छेत्रे भयप्रद ।
सज्जनानां तमश्छिन्दि मामके च हृदि स्थितम् ॥ ४०२ ॥

[३९]चर्म रक्ष सदा पापाद् हरिपूजांन्तरायतः ।
नमामि सततं चर्म मम भक्तिं च वर्धय ॥ ४०३ ॥

वायुरूप हरेर्बाण वायोरधिकवेगवान् ।
नय मां वायुवेगेन विष्णुलोकं सनातनम् ॥ ४०४ ॥

इत्यायुधानि सम्प्रार्थ्य गृहीत्वा मुद्रिकास्ततः ।
धारयेत्तिलकेष्वेता विष्णुसायुज्यसिद्धये ॥ ४०५ ॥

एकं कपोले हृदि द्वे त्रीणि मध्योदरे तथा ।
पञ्च पार्श्वद्वयं त्रीणि दक्षिणे स्तनमण्डले ॥ ४०६ ॥

चक्रद्वयं दक्षिणे तु बाहौ तिलकमूर्धनि ।
न्यसेदधस्तादेकं तु तिलके वामबाहुके ॥ ४०७ ॥

कर्णमूले तथा कण्ठे एकमेकं तु धारयेत् ।
वामे कपोले शङ्खं तु द्वयं पार्श्वे स्तनत्रयम् ॥ ४०८ ॥

---

३९. चर्मराक्षसपा

शङ्खद्वयं तथा बाहौ विन्यसेत् पुण्ड्रमूर्धनि ।
बाहौ तु तिलकाधस्तात् दक्षिणे शङ्खमेककम् ॥ ४०९ ॥
कर्णमूले तथा वामे शङ्खमेकं तु विन्यसेत् ।
ललाटे तु गदा धार्या वामपार्श्वे तथा स्तने ॥ ४१० ॥
एकैकं दक्षिणे बाहौ चक्राधस्ताद् द्वयं लिखेत् ।
नमः सर्वेषु पुण्ड्रेषु स्तनयोश्च कपोलयोः ॥ ४११ ॥
शरं चापं तथा मूर्ध्नि स्तनयोः खड्गचर्मणी ।
कौस्तुभं हृदये दद्याच्छ्रीवत्सं दक्षिणे स्तने ॥ ४१२ ॥
ब्राह्मणो धारयेदेवं क्षत्रियादिस्तथैव च ।
अभावे तिलकस्यापि तत्र तत्र तथा न्यसेत् ॥ ४१३ ॥
स्त्रीभिस्तु शूद्रवद् धार्यं मन्त्रैर्नामात्मकैस्तथा ।
प्रक्षाल्यायुधतोयेन शिरो मूलेन मार्जयेत् ॥ ४१४ ॥
नमो मुद्राभ्य इत्युक्त्वा स्थापयेन्मानिताः सदा ।
नाधस्तात्प्रक्षिपेत्तास्तु केवलं भुवि *निक्षिपेत् ॥ ४१५ ॥
सौवर्णा राजता वापि यत्किञ्चिद्धातुजा अपि ।
काष्टपाषाणजा वापि नावमन्येत कर्हिचित् ॥ ४१६ ॥
वैष्णवैः कार्यमेवं हि शैवादीनां च मे श्रुणु ।
होमजां भूतिमादाय 'सद्योजातादि'मन्त्रकैः ॥ ४१७ ॥
'मानस्तोके'ति मन्त्रेण तत्तद्वर्णोक्तमन्त्रकान् ।
तर्जन्यनामिकामध्याङ्गुलिभ्यो तिलकं न्यसेत् ॥ ४१८ ॥

---

* 'न क्षिपेत्' इति पाठः साधुः ।

शैवैः शाक्तैश्च तिर्यञ्चो गणेशैश्चन्दनेन तु ।
तिर्यञ्च एव कर्तव्यास्तत्तत्पुण्ड्राङ्कितास्सदा ॥ ४१९ ॥

सौराः वैष्णववत् कुर्युर्दण्डाकारं ललाटके ।
पद्माकारं वक्षसि स्यात् वेणुपत्रसमान् परान् ॥ ४२० ॥

प्रदीपकालिकाभांश्च चतुःपञ्चाङ्गुलीमितान् ।
एवंविधानि पुण्ड्राणि पश्चात् सन्ध्यां समाचरेत् ॥ ४२१ ॥

श्राद्धं सन्ध्या तपो होमः स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वम् ऊर्ध्वपुण्ड्रं विना कृतम् ॥ ४२२ ॥

स्त्रियो वा पुरुषो वापि विना पुण्ड्रं कदाचन ।
न कुर्युः सुकृतं कर्म क्रियमाणं वृथा भवेत् ॥ ४२३ ॥

सुवासिन्योऽथ बिभृयुः तिलकोपरि कुङ्कुमम् ।
पश्चात्कुर्युः शुभं कर्म गृहकार्याणि यानि च ॥ ४२४ ॥

ऊर्ध्वपुण्ड्रविहीनस्तु किञ्चित्कर्म करोति यः ।
तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छति ॥ ४२५ ॥

अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यम् ऊर्ध्वपुण्ड्राङ्कितो नरः ॥ ४२६ ॥

ऊर्ध्वपुण्ड्रं विना नारी पाकं पचति यद्गृहे ।
तदन्नं च शुनोच्छिष्टं तद्रसं सुरया समम् ॥ ४२७ ॥

जपहोममखस्नानं स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वम् ऊर्ध्वपुण्ड्रं विना कृतम् ॥ ४२८ ॥

अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
मङ्गलेषु च सर्वेषु न धार्यं गोपिचन्दनम् ॥ ४२९ ॥

अभ्यङ्गे चोत्सवे काले कस्तूरीचन्दनादिकम् ।
ऊर्ध्वपुण्ड्रं सदा कुर्यात् श्रौते स्मार्ते च कर्मणि ॥ ४३० ॥

नैवात्यये मृदा कुर्यादूर्ध्वपुण्ड्रं तु भस्मना ।
ब्रह्मघ्नो वाथ गोघ्नो वा हैतुकः सर्वपापकृत् ।
गोपीचन्दनसम्पर्कान्मुक्तो भवति तत्क्षणात् ॥ ४३१ ॥

(ऊर्ध्वपुण्ड्रमुद्रादिधारणे उमामहेश्वरसंवादकथनम्)

ईश्वरः -

साधु साधु महादेवी भूतानां च हितैषिणी ।
वैष्णवानां च माहात्म्यं वक्ष्यामि तव सुव्रते ॥ ४३२ ॥

शङ्खचक्राङ्कितान् भक्तान् यः पूजयति मानवः ।
स साक्षाद् विष्णुसामीप्यं लभते नात्र संशयः ॥ ४३३ ॥

विष्णुचक्राङ्कितं विप्रं यो भूम्यामभिवादयेत् ।
ललाटे पांसुसङ्ख्यानि ब्रह्मलोके महीयते ॥ ४३४ ॥

चक्राङ्कितभुजो यस्मिन् पङ्क्तिमध्ये तु भुञ्जते ।
सा पङ्क्तिः स्वर्गलोके च देवपङ्क्तिषु पूज्यते ॥ ४३५ ॥

अष्टके मासिके पित्रोश्चक्राङ्कितभुजं वरेत् ।
स साक्षाद् विष्णुसामीप्यं मृतः प्राप्नोत्यसंशयः ॥ ४३६ ॥

शङ्खचक्राङ्कितं विप्रं दृष्ट्वा योऽभ्युत्थितो भवेत् ।
परमानन्दमाप्नोति किं पुनस्त्वैहिकं फलम् ॥ ४३७ ॥

चक्राङ्कितानां नामानि यो वदेद् भक्तिमान्नरः ।
सर्वपापविनिर्मुक्तः स याति परमं पदम् ॥ ४३८ ॥

चक्राङ्किताय विप्राय यो भक्त्याऽन्नं ददाति सः ।
अन्नसङ्ख्यानि वर्षाणि ब्रह्मलोके महीयते ॥ ४३९ ॥

विष्णुभक्ताय विप्राय चक्रचिह्नाय मानवः ।
गोचर्ममात्रभूमिं तु [४०]दत्वा राज्यमवाप्नुयात् ॥ ४४० ॥

विष्णुचक्राङ्गितं विप्रं विष्णुमूर्तिमिव स्मरेत् ।
स वै विष्णुमयो भूत्वा वैष्णवीं गतिमाप्नुयात् ॥ ४४१ ॥

अग्नितप्तेन चक्रेण बाहुमूले तु लाञ्छितः ।
दहन्ति सर्वपापानि ईश्वरत्वं भजन्ति च ॥ ४४२ ॥

विष्णुचक्राङ्किता यत्र वसन्ति नरपुङ्गवाः ।
तद्देशोत्पन्नवस्तूनि वैष्णवत्वं लभन्ति च ॥ ४४३ ॥

विष्णुचक्राङ्कितो विद्वान् यस्मिन् देशे वसेत्सुखम् ।
स देशो मत्प्रियः पुण्यः वैष्णवानामपि प्रिये ॥ ४४४ ॥

विष्णुभक्तियुता विप्राः शङ्खचक्राङ्किता नराः ।
क्रीडार्थमपि यद् ब्रूयुः स धर्मः परमोत्तमः ॥ ४४५ ॥

यस्मिन् देशे कृतस्नाना वैष्णवाः चक्रलाञ्छिताः ।
तस्मिन् स्नानं प्रकुर्वीत विष्णुसालोक्यसिद्धये ॥ ४४६ ॥

---

४०. हृत्वा

विष्णुभक्ताय विप्राय महादेवि महात्मने ।
शाकमात्रप्रदानेन मुक्तिं यान्ति हि मानवाः ॥ ४४७ ॥

सर्वभूतदयायुक्तं वैष्णवं द्वेष्टि यो नरः ।
स चण्डालो महादेवि रौरवं नरकं व्रजेत् ॥ ४४८ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमम् ।
चक्राङ्कितस्य निन्दा च पञ्चैते त्वतिपातकाः ॥ ४४९ ॥

यः पुत्रः पितरं [४१]द्वेष्टि तं विद्यादन्यरेतसम् ।
यो विष्णुं सततं द्वेष्टि तं विद्यादन्यरेतसम् ॥ ४५० ॥

किं तस्य बहुभिः शास्त्रैः किं तस्य बहुभिः श्रुतैः ।
अवैष्णवस्य विप्रस्य पुण्यं शश्वद् विनश्यति ॥ ४५१ ॥

यथा दारुमयो हस्तिर्यथा चर्ममयो मृगः ।
अवैष्णवस्तथा विप्रस्ततो व्यर्थो भविष्यति ॥ ४५२ ॥

रूपलावण्यसंयुक्ताः महावंशोद्भवा द्विजाः ।
अवैष्णवाः न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ४५३ ॥

शरीरशोषणं व्यर्थं कृच्छ्रचान्द्रायणादिभिः ।
विष्णुपादाम्बुजध्यानहीनस्य पुरुषस्य च ॥ ४५४ ॥

विद्यानवद्यसम्पन्नो विशालकुलसम्भवः ।
विष्णुभक्तिविहीनो यः चण्डालसदृशो भवेत् ॥ ४५५ ॥

---

४१. वेष्टि

अवैष्णवो दुराचारः पापानामाकरः खलु ।
पापचारी दुराचारः तस्मात्तं परिवर्जयेत् ॥ ४५६ ॥

शिखा यज्ञोपवीतं च चक्रचिह्नं च कुण्डले ।
ऊर्ध्वपुण्ड्राणि वस्त्राणि दण्डं चैव सकुण्डलम् ।
शिखां च धारयेद् विप्रः शुक्लदण्डो दृढव्रतः ॥ ४५७ ॥

सात्त्विकं भावमास्थाय स्थिरचित्तो भवेत् सदा ।
समः शत्रौ च मित्रे च तथा मानावमानयोः ॥ ४५८ ॥

शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।
अनपेक्षः शुचिर्दक्षः उदासीनो गतव्यथः ॥ ४५९ ॥

सर्वारम्भपरित्यागी विष्णुभक्तो विधीयते ।
अधृत्वा विधिवच्चक्रं यदि कर्म समाचरेत् ।
निष्फलं तद् भवेत् सर्वमिष्टापूर्त्तं द्विजोत्तम ॥ ४६० ॥

ये केचिद् यत्र पुरुषाः विष्णुचक्रेण लाञ्छिताः ।
तेषां दर्शनमात्रेण महापातकनाशनम् ॥ ४६१ ॥

नारायणायुधैर्नित्यं लाञ्छितो यस्य विग्रहः ।
पापकोटिशतं दग्धं तस्मिन् दृष्टे भवेत् सदा ॥ ४६२ ॥

राक्षसाश्च पिशाचाश्च गन्धर्वा दैत्यदानवाः ।
कृष्णायुधाङ्कितं देहं दृष्ट्वा नश्यन्ति दूरतः ॥ ४६३ ॥

संवत्सरेण यत्पापं मनसा कर्मणा कृतम् ।
तत्सर्वं नश्यते तेषां कृष्णचक्राङ्क[४२]दर्शनात् ॥ ४६४ ॥

---
४२. दर्शनम्

दृष्ट्वा भागवतं दूरात् सन्मुखो यो न याति हि ।
न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम् ॥ ४६५ ॥

कृष्णायुधाङ्कितं दृष्ट्वा स्वागतं न करोति यः ।
द्वादशाब्दार्जितं पुण्यं पुष्कलं नाधिगच्छति ॥ ४६६ ॥

चक्राङ्कितभुजं दृष्ट्वा यस्तु तं नाभिवादयेत् ।
तिर्यग्योनिशतं प्राप्य विष्टायां जायते क्रिमिः ॥ ४६७ ॥

शरीरे यस्य कस्यापि दृश्यते वै सुदर्शनम् ।
तस्मै कुर्वीत पक्षीन्द्र नमस्कारं प्रयत्नतः ॥ ४६८ ॥

यथा सम्पूजनीयोऽसौ शङ्खचक्रधरो हरिः ।
तथैव विप्रः सम्पूज्यो शङ्खचक्राङ्कितो यदि ॥ ४६९ ॥

अविद्यो वा सुविद्यो वा शङ्खचक्रोर्ध्वपुण्ड्रधृक् ।
ब्राह्मणः सर्वलोकेषु पूजनीयो हरिर्यथा ॥ ४७० ॥

दुराशीर्वा दुराचारः शङ्खचक्रोर्ध्वपुण्ड्रधृक् ।
नृणां सर्वमघं हन्ति तमः सूर्योदये यथा ॥ ४७१ ॥

चक्रचिह्नविहीनं तु यः श्राद्धे भोजयिष्यति ।
व्यर्थं भवति तत्सर्वं निराशाः पितरो गताः ॥ ४७२ ॥

विष्णुचिह्नविहीनं तु प्रयत्नेन विवर्जयेत् ।
अचक्रधारिणं विप्रं यः श्राद्धे भोजयेन्नरः ।
रेतोमूत्रपुरीषादि स पितृभ्यः प्रयच्छति ॥ ४७३ ॥

[४३]क्रतुसाहस्रिणं वापि लोके विप्रमवैष्णवम् ।
शङ्खचक्रादिरहितं प्राकृतं ब्राह्मणाधमम् ।
पूजयिष्यति यः श्राद्धे सर्वं तस्य हि निष्फलम् ॥ ४७४ ॥

श्राद्धकाले विशेषेण कर्ता भोक्ता च धारयेत् ।
विष्णुचक्राङ्कितं विप्रं पूजयेच्छ्राद्धकर्मणि ॥ ४७५ ॥

चक्राङ्कितशरीराय हव्यं कव्यं द्विजातये ।
यो ददाति नरः प्राज्ञः स भवेत् पुण्यकृत्तमः ॥ ४७६ ॥

ऊर्ध्वपुण्ड्रविहीनस्य स्मशानसदृशं मुखम् ।
तं दृष्ट्वा पापकर्माणम् आदित्यमवलोकयेत् ॥ ४७७ ॥

तिर्यक्पुण्ड्रं न कर्तव्यं प्राप्तेऽपि प्राणसङ्कटे ।
यदि कुर्याद् विमूढात्मा रौरवं नरकं व्रजेत् ॥ ४७८ ॥

प्रमादादवशाद् यस्तु त्रिपुण्ड्रं धारयेद् द्विजः ।
स भुक्त्वा नरकान् घोरान् तिर्यग्योनिमवाप्नुयात् ॥ ४७९ ॥

वैष्णवो नैव कुर्वीत तिर्यक्पुण्ड्रं कदाचन ।
यदि कुर्वीत मोहेन तं वै घातयते यमः ॥ ४८० ॥

हेलया यः प्रकुर्वीत तिर्यक्पुण्ड्रं द्विजन्मनः ।
तं दृष्ट्वा पापकर्माणमादित्यमवलोकयेत् ॥ ४८१ ॥

पश्चात्यगा शिखा धार्या सर्वकर्मसु पूजिता ।
नैव धार्या पूर्वपार्श्वस्थिता शास्त्रविनिन्दिता ॥ ४८२ ॥

४३. क्रतुसाहासणम्

पश्चात्यगं शिखाचक्रं शिरश्चक्रमितीरितम् ।
शिरश्चक्रयुतो विप्रः सर्वकर्मसु पूजितः ॥ ४८३ ॥

उपवीतं क्रमेण स्यात् कार्पासं शाणनादिकम् ।
त्रिवृदूर्ध्वं च यत्तच्च भवेदायुर्विवृद्धये ॥ ४८४ ॥

ओङ्कारः प्रथमः तन्तुः द्वितीयोऽग्निस्तथैव च ।
तृतीयो नागदेवत्यः चतुर्थः सूर्य एव च ॥ ४८५ ॥

पञ्चमो वेदगर्भश्च षष्ठश्चैव प्रजापतिः ।
सप्तमो वायुदेवत्यः अष्टमो मनुरेव च ।
नवमः सर्वदैवत्यः इत्येते नवतन्तवः ॥ ४८६ ॥

केन चोत्पादितं सूत्रं केनेदं त्रिगुणीकृतम् ।
केनेयं क्रियते ग्रन्थिः केनेदं चाभिमन्त्रितम् ॥ ४८७ ॥

विष्णुनोत्पादितं सूत्रं रुद्रेण त्रिगुणीकृतम् ।
ब्रह्मणा क्रियते ग्रन्थिः गायत्र्या चाभिमन्त्रितम् ॥ ४८८ ॥

यज्ञोपवीतस्योत्पत्तिं यो न जानाति वै द्विजः ।
अन्ते व्रजति संसारान्नास्तिको वृषभो यथा ॥ ४८९ ॥

उच्छिष्टं तोरणं छिन्नं विक्रीतं विधवाकृतम् ।
भुक्त्यन्तरे त्वनध्याये सप्ततन्तून्न धारयेत् ॥ ४९० ॥

[४४]विधवारचितं सूत्रम् अनध्याये कृतं च यत् ।
विच्छिन्नमप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ॥ ४९१ ॥

४४. विधवाचरितम्

ऊर्ध्ववृत्तमधोवृत्तं पुनरूर्ध्ववृतं तथा ।
तत्सद्यज्ञोपवीतं स्यात्तस्यैको ग्रन्थिरुच्यते ॥ ४९२ ॥

उपवीतं भिन्नतन्तुं जीर्णं कश्मलदूषितम् ।
विसृजामि पुनर्ब्रह्मन् वर्चो दीर्घायुरस्तु मे ॥ ४९३ ॥

*इति विसर्जयेत् ।*

बह्वृचः सामगाश्चैव ये चान्ये याजुषस्तथा ।
कण्ठादुत्तीर्य सूत्रं तु पुनः संस्कारमर्हति ॥ ४९४ ॥

अभ्यङ्गे चोदधिस्नाने मातापित्रोर्मृतेऽहनि ।
कण्ठादुत्तीर्य सूत्रं तु कुर्याद् वै क्षालनं द्विजः ॥ ४९५ ॥

तस्मात् सर्वप्रयत्नेन चक्रादीन् धारयेत्सदा ।
धारणानन्तरं तत्र एवं ब्रूयात् द्विजोत्तमः ॥ ४९६ ॥

पुत्रमित्रकलत्रादिर्यः कश्चिन्मत्परिग्रहः ।
सह देवेन सर्वोऽसौ विष्णुप्रीत्यै मयाऽर्पितः ॥ ४९७ ॥

पश्चात्स्वधर्ममास्थाय तिष्ठेदाजीवनं मम ।
भक्त्या चाव्यभिचारिण्या सर्वदाप्तमनोरथः ॥ ४९८ ॥

तप्तचक्राङ्कितं दृष्ट्वा यो निन्दति नराधमः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥ ४९९ ॥

ब्रह्मा -

तव चक्राङ्कितं कृत्वा ह्यात्मानमथदीक्षितः ।
पद्माक्षतुलसीमालाफलं मे ब्रूहि केशव ॥ ५०० ॥

## भगवानुवाच

तुलसीकाष्ठजां मालां कण्ठस्थां वहते तु यः ।
अप्यशौचोऽप्यनाचारो मामेवैति न संशयः ॥ ५०१ ॥

धात्रीफलकृता माला तुलसीकाष्ठसम्भवा ।
दृश्यते यस्य देहे तु स वै भागवतो नरः ॥ ५०२ ॥

तुलसीकाष्ठजां मालां कण्ठस्थां वहते तु यः ।
ददाति पापिनां मुक्तिं किं पुनर्मम सेविनाम् ॥ ५०३ ॥

*तुलसीपत्रसम्भूतां यो मालां वहते नरः ।
पत्रे पत्रेऽश्वमेधानां दशानां लभते फलम् ॥ ५०४ ॥

तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ॥
फलं यच्छाम्यहं वत्स प्रत्यहं द्वारकोद्भवम् ॥ ५०५ ॥

निवेद्य भक्त्या मे मालां तुलसीकाष्ठसम्भवाम् ।
वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ॥ ५०६ ॥

सदा प्रीतमनास्तस्य वत्स प्राणतरो हि सः ।
तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ॥ ५०७ ॥

प्रायश्चित्तं न तस्यास्ति नाशौचं तस्य विद्यते ।
तुलसीकाष्ठसम्भूतं शिरोबाहुविभूषणम् ।
बाह्वोः करे च मर्त्यस्य देहे यस्य स मे तनुः ॥ ५०८ ॥

---

* श्रीसत्यात्मतीर्थश्रीमच्चरणप्रदत्तकोशेऽधिकः पाठः

तुलसीकाष्ठमालाभिः भूषितः पुण्यमाचरेत् ।
पितृणां देवतानां च पुण्यं कोटिगुणं कलौ ॥ ५०९ ॥

तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ।
दृष्ट्वा नश्यन्ति दूरेण वातोद्धूता यथा घनाः ॥ ५१० ॥

यद्देहे तुलसीकाष्ठं पत्रं शुष्कमथार्द्रकम् ।
भरते तद्गृहे नैव पापं सङ्क्रमते कलौ ॥ ५११ ॥

तुलसीकाष्ठमालाभिर्भूषिते भुवि मानवे ।
दुःस्वप्नं दुर्निमित्तं च न भयं शात्रवं क्वचित् ॥ ५१२ ॥

धारयन्ति न मे मालां हैतुकाः पापबुद्धयः ।
[४५]नरकान्न निवर्तन्ते दग्धाः कोपाग्निना मम ॥ ५१३ ॥

रुद्राक्षस्फटिकादीनां मालां यो वहते नरः ।
न मे भक्तः स पापात्मा नरकान् प्रतिपद्यते ।
तस्माद्धार्या प्रयत्नेन माला तुलसिसम्भवा ॥ ५१४ ॥

*पद्माक्षनिर्मिता भक्त्या फलैः धात्र्याः सुपुण्यदा ।
तदूर्ध्वपुण्ड्रशङ्खाद्यैर्युतस्तुलसिभूषणैः ॥ ५१५ ॥

तुलसीकाष्ठसम्भूतमाले कृष्णजनप्रिये ।
बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभे ॥ ५१६ ॥

यानि कानि च माल्यानि यत्किञ्चिदनुलेपनम् ।
अलक्ष्मीपरिहाराय नित्यं सेवेत वै बुधः ।
सन्ध्योपास्त्यादिकं कुर्यात् कुशपाणिर्हि मां स्मरन् ॥ ५१७ ॥

४५. नरकान्नातिवर्तन्ते * श्रीसत्यात्मतीर्थश्रीमच्चरणप्रदत्तकोशेऽधिकः पाठः

(सन्ध्या पापविशोधिका)

यावन्तोऽस्यां विकर्मस्थाः पृथिव्यां बालिशाः द्विजाः ।
तेषां पापविशुध्यर्थं सन्ध्या सृष्टा स्वयम्भुवा ॥ ५१८ ॥

व्यासः -

उपास्तिः सन्धौ सूर्यस्य निशायां दिवसस्य च ।
तमेव ताभ्यां तस्मात्तु प्रवदन्ति मनीषिणः ॥ ५१९ ॥

मौञ्जीबन्धनमारभ्य सायं प्रातश्च कालयोः ।
मध्याह्नेऽपि च कर्तव्यं यावत्प्राणविमोक्षणम् ॥ ५२० ॥

प्रातः सन्ध्यां सनक्षत्राम् उपासीत यथाविधि ।
सावित्र्यां पश्चिमां सन्ध्यां सार्धास्तमितभास्करे ।
अध्यर्धयामादासायं सन्ध्या माध्याह्निकीष्यते ॥ ५२१ ॥

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातः सन्ध्या त्रिधा मता ॥ ५२२ ॥

उत्तमा सूर्यसहिता मध्यमाऽस्तमिते रवौ ।
अधमा तारकोपेता सायं सन्ध्या त्रिधा मता ॥ ५२३ ॥

अत्रिः -

यः सन्ध्यां कालतः प्राप्ताम् आलस्यादतिवर्तते ।
सूर्यहत्यामवाप्नोति उलूकत्वमियात्सदा ॥ ५२४ ॥

वसिष्ठः -

धृतोर्ध्वपुण्ड्रदेहस्तु सन्ध्योपास्तिं समाचरेत् ।
उपासीत द्विजः सन्ध्यां प्राङ्मुखोदङ्मुखोऽपि वा ॥ ५२५ ॥

मुहूर्तमुदयादर्वाक् द्विमुहूर्तमतः परम् ।
सन्ध्याकालस्तु विज्ञेयो विपरीतस्तु पश्चिमे ॥ ५२६ ॥

सन्ध्योः सन्ध्यामुपासीतानस्ते ह्यनुदिते रवौ ।
दृश्यमाने रवौ चैकमदृश्ये द्विमुहूर्तकम् ॥ ५२७ ॥

दिवोदितानि कर्माणि प्रमादादकृतानि च ।
शर्वर्यां प्रथमे यामे तानि कुर्यादनुक्रमात् ॥ ५२८ ॥

स्नानहीनो यदा कुर्यात् प्रातः सन्ध्यादिकं नरः ।
स सङ्गवे यदि स्नायात् पुनः सन्ध्यां समाचरेत् ॥ ५२९ ॥

(सदाचारस्मृतिः)

मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान् ॥
तर्पयित्वा निपीड्याथ वासो विस्तृत्य चाञ्जसा ॥ ६ ॥

अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ ७ ॥

आसूर्यदर्शनात् तिष्ठेत् ततस्तूपविशेत वा ।
पूर्वां सन्ध्यां सनक्षत्राम् उत्तरां सदिवाकराम् ।
उत्तरामुपविश्यैव वाग्यतः सर्वदा जपेत् ॥ ८ ॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुः धृतशङ्खचक्रः ॥ इति ॥ ९ ॥

भूमौ हस्तं प्रतिष्ठाप्य मार्जनं तत्र कारयेत् ।
विहाय च विमूढात्मा रौरवं नरकं व्रजेत् ॥ ५३० ॥

सन्ध्यायां मार्जने चैव तर्पणादिषु सर्वदा ।
दर्भाभावे तिलाभावे तुलस्येव फलप्रदा ॥ ५३१ ॥

तुलसीं विना तु यः कुर्यात् सन्ध्याकाले तु मार्जनम् ।
तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छति ॥ ५३२ ॥

नवपादमथाक्रम्य अर्धर्चावसुसङ्ख्यया ।
ऋग्भिश्च तिसृभिः प्रोक्तमेवं विंशतिमार्जनम् ॥ ५३३ ॥

ससथत्रयमाकाशे मस्तके वरवत्रयम् ।
मननत्रयं च पाताले एवं मार्जनलक्षणम् ? ॥ ५३४ ॥

(प्राणायामः)

सावित्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्वकम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ ५३५ ॥

भूर्भुवस्वर्महर्जनस्तपः सत्यं तथैव ।
प्रत्योङ्कारसमायुक्तं तदा तत्सवितुः परम् ॥ ५३६ ॥

ओमापोज्योतिरित्येतच्छिरः पश्चात्प्रयोजयेत् ।
त्रिरावर्तनयोगाच्च प्राणायामस्तु शब्दते ॥ ५३७ ॥

पूरकः कुम्भको रेचः प्राणायामस्त्रिलक्षणः ।
पञ्चाङ्गुळीभिर्नासाग्रपीडनं प्रणवाभिधा ।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥ ५३८ ॥

कनिष्ठानामिकाङ्गुष्ठैर्नासाग्रस्य प्रपीडनम् ।
ओङ्कारमुद्रिका प्रोक्ता यतेश्च ब्रह्मचारिणः ॥ ५३९ ॥

अगर्भश्च सगर्भश्च प्राणायामो द्विधा पुनः ।
अगर्भः ध्यानहीनस्तु सगर्भो ध्यानसंयुतः ।
अगर्भात् कोटिगुणतः प्राणायामः सगर्भकः ॥ ५४० ॥

नासिकाकृष्ट उच्छ्वासगमः पूरक उच्यते ।
कुम्भको निखिलाश्वासो रेचमानस्तु रेचकः ॥ ५४१ ॥

रेचकः सृजते वायुं पूरकस्तन्निरोधकः ।
समेन संस्थितो योऽसौ कुम्भकः समुदीरितः ॥ ५४२ ॥

कुम्भके विष्णुर्देवता । इतरयोर्ब्रह्मरुद्रौ देवते ॥

(मार्जनपद्धतिः)

प्राणानायम्य विधिवद् वाग्यतः संयतेन्द्रियः ।
अथ सन्ध्यामुपासिष्य इति सङ्कल्प्य मार्जयेत् ॥ ५४३ ॥

'आपोहिष्ठा' दिभिः पादैः शिरस्यासिच्य विप्रुषः ।
यस्य क्षयायेत्यधस्ताच्च क्षिप्त्वाद्भिः परिषेचयेत् ॥ ५४४ ॥

प्रातरुत्थाय सततं कुर्यान्मार्जनमात्मनः ।
संवत्सरकृतं पापं मार्जनान्ते विनश्यति ॥ ५४५ ॥

विना यस्तुलसीं कुर्यात् सन्ध्याकाले तु मार्जनम् ।
तत्सर्वं राक्षसहृतं नरकं च प्रयच्छति ॥ ५४६ ॥

धाराच्युतेन तोयेन सन्ध्योपास्तिं विगर्हिताम् ।
वातरागप्रशंसन्ति न प्रशंसन्ति देवताः ? ॥ ५४७ ॥

मन्त्रपूतं जलं यस्मात् आपोहिष्ठेति मन्त्रितम् ।
पतत्यशुचिदेशेषु तस्मात्तत्परिमार्जयेत् ॥ ५४८ ॥

रजस्तमोमोहजातान् जाग्रत्स्वप्नसुषुप्तिजान् ।
मनो वाक्कायजान् [४६]दोषान्नवैतान् नवभिर्दहेत् ॥ ५४९ ॥

पादे पादे क्षिपेद् वारि ब्रह्महत्यां व्यपोहति ।
नद्यां तीर्थे ग्रहे वापि भाजने मृण्मयेऽपि वा ।
औदुम्बरेऽथ सौवर्णे राजते दारुसम्भवे ॥ ५५० ॥

कृत्वा च वामहस्ते तु सन्ध्योपास्तिमुपासते ।
सा सन्ध्या वृषली प्रोक्ता असुरास्तैस्तु तर्पिताः ॥ ५५१ ॥

तुलसीपत्रगलितं तोयं यः शिरसा वहेत् ।
गङ्गापुण्यमवाप्नोति शतधेनुफलं लभेत् ॥ ५५२ ॥

आपोहिष्ठेति त्रिचः कुर्यात् मार्जनं तु कुशोदकैः ।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥ ५५३ ॥

मार्जनार्चनबलिकर्मभोजनादि देवतीर्थेन कुर्यात् ॥ इति ।

सायमग्निश्चमेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने ततश्चाचमनं चरेत् ॥ ५५४ ॥

---

४६. द्वेषान्

पूरकेणोर्ध्वमाकृष्टं धारयेदिन्दुमण्डले ।
कुम्भकेनाथ सर्वाङ्गे व्यापकं पापसञ्चयम् ॥ ५५५ ॥

रेचकेन समानीय पाणौ संस्थाप्य दक्षिणे ।
तत्पापं तु क्षिपेद् भूमौ चोरवज्रीचहस्ततः ॥ ५५६ ॥

तज्जलं सावलोक्याथ वामभागे क्षितौ क्षिपेत् ।
ऋतं चेति पठित्वा तु तज्जलं तु क्षिपेत् क्षितौ ॥ ५५७ ॥

**(यन्त्रलेखनपूर्वकम् अर्घ्यदानम्)**




दैत्यानां रक्षणार्थाय वेत्रपाख्यो महासुरः ।
शुक्रस्यैवाज्ञया तत्र जले तिष्ठति सर्वदा ॥ ५५८ ॥

अतस्तस्यापकारार्थं लिखेद् व्याहृतियन्त्रकम् ।
त्रिकोणं दीर्घरम्यं च देवानां सिद्धिदायकम् ॥ ५५९ ॥

कोणमध्ये तु ह्रीङ्कारं कोणाग्रे प्रणवं न्यसेत् ।
दण्डेषु व्याहृतिं चैव मध्ये वरुणबीजकम् ॥ ५६० ॥

कनिष्ठाग्रेण वै तत्र उल्लिखेत्तु यथाक्रमम् ।
लिखित्वा मन्त्रराजं तु पश्चादर्घ्यं समाचरेत् ॥ ५६१ ॥

दैत्यानां च वधार्थाय नन्दपाख्यो महाऽसुरः ।
(अत्र नन्दपाख्यो यो महाऽसुरः,
तस्य वधार्थयेति सम्बन्धः ।)
एकं वाहननाशाय द्वितीयं शस्त्रनाशनम् ॥ ५६२ ॥

राक्षसानां वधायैकं दद्यादर्घ्यत्रयं बुधः ।
प्रत्यर्घ्यं तु जपेत् सम्यक् 'प्रतिचक्ष्वे'ति वै ऋचम् ।
पुनरर्घ्याधिकारार्थम् आत्मसंरक्षणाय च ॥ ५६३ ॥

प्रतिं चक्ष्व विचक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोँभ्यो वधमस्य तमशनिं यातुमद्भ्यः ।

यद्यकच्च वृत्रहन्नित्यस्य मन्त्रस्य सुवाक्ष ऋषिः ॥

सूर्यो देवता ॥ [४७]त्रिष्टुप् छन्दः ॥ प्रातः सन्ध्यावन्दने कालातिक्रमण-प्रायश्चित्तार्थम् अर्घ्यप्रदाने विनियोगः ॥

यद्यकच्च वृत्रहन्नुदगाँ अभि सूर्य सर्वं तदिन्द्र ते वशें ।

प्रातर्देवीमित्यस्य मन्त्रस्य आत्रेय उरुचक्रि ऋषिः । त्रिष्टुप् छन्दः । [४८]मित्रावरुणौ देवते । मित्रावरुणौ देवते । माध्याह्नकालातिक्रमणप्रायश्चित्तार्घ्यप्रदाने विनियोगः ॥

प्रातर्देवीमदितिं जोहवीमि मध्यन्दिंन उदिंता सूर्यस्य ।
राये मिंत्रा वरुणा सर्वतातेळें तोकाय तनयाय शं यो ॥

उद्घेदभीत्यस्य मन्त्रस्य सुकक्ष ऋषिः । गायत्री छन्दः । अग्निर्देवता[४९] । सायं सन्ध्यावन्दने कालातिक्रमणप्रायश्चित्तार्घ्यप्रदाने विनियोगः ॥

उद्घेदभि श्रुता मघं वृषभं नर्यापसम् अस्तारमेषि सूर्य ।

कालातिक्रमदोषे तु त्रिसन्ध्यमपि सर्वदा ।

---

४७. गायत्री छन्दः इति पाठः साधुः ।
४८. ब्रह्मा देवता
४९. सूर्यो

चतुरर्घ्यं च गायत्रीशिरोमन्त्रविधिं स्मरेत् ।
चतुरर्घ्यं तु गायत्र्या दद्याद् व्याहृतिसम्पुटम् ॥ ५६४ ॥

कालातीतविशुध्यर्थं त्रिसन्ध्यं तु समाचरेत् ।
सकृदर्घ्यं तु मध्याह्ने प्रक्षिपेद् 'हंस' इत्यृचा ॥ ५६५ ॥

'आकृष्णेने'ति मन्त्रेण गायत्र्या चेति केचन ।
उत्थायोर्ध्वं प्रतिप्रोक्षेद् गायत्र्यात्र्यञ्जलीन् द्विजः ॥ ५६६ ॥

आदित्यमण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम् ।
गोशृङ्गमात्रमुद्धृत्य रविं वीक्ष्य जलाञ्जलिम् ॥ ५६७ ॥

द्वौ हस्तौ च समौ कृत्वा पाणी उद्धृत्य निक्षिपेत् ।
द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ॥ ५६८ ॥

गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ।
जप्त्वाऽर्घ्यं च प्रदातव्यं जलाभावे शुचिस्थलम् ॥ ५६९ ॥

सम्प्रोक्ष्य वारिणा सम्यक् ततोऽर्घ्याणि प्रदापयेत् ।
त्रिसन्ध्यासु च गायत्र्या पूरितं चाञ्जलित्रयम् ॥ ५७० ॥

अप्सु क्षिपेदर्कमुखो मध्याह्ने चोत्तरामुखः ।
सूर्यायैव तु गायत्र्या त्रिसन्ध्यास्वञ्जलिं क्षिपेत् ॥ ५७१ ॥

प्रातर्मध्याह्नयोस्तिष्ठन् सायमासीन एव तु ।
सायङ्काले तु गायत्र्या मध्याह्ने 'हंस'मन्त्रतः ॥ ५७२ ॥

'आकृष्णेने'ति मन्त्रेण गायत्र्या चेति केचन ।
ईषन्नम्रः प्रभाते तु मध्याह्ने दण्डवद्भवेत् ॥ ५७३ ॥

उपविश्य तु सायाह्ने दद्यादर्घ्यत्रयं शुचिः ।
तिष्ठन्नर्घ्यत्रयं दद्यात्त्रिषु कालेषु बह्वृचः ॥ ५७४ ॥

प्रातर्मध्याह्नयोरप्सु सायाह्ने भुवि निक्षिपेत् ।
उष्णोदकेन या सन्ध्या पादमध्ये च मार्जनम् ॥ ५७५ ॥

उपविश्य तु यच्चार्घ्यं तत्तोयं रुधिरं भवेत् ।
तर्जन्यङ्गुष्ठयोगेन राक्षसी मुद्रिका भवेत् ।
यो ददाति तया चार्घ्यं तत्सर्वं निष्फलं भवेत् ॥ ५७६ ॥

तिस्रः कोटयर्धकोटयस्तु मन्देहा नाम राक्षसाः ।
दुष्टमन्त्राः दुराचाराः सूर्यस्याभिमुखे स्थिताः ॥ ५७७ ॥

इदमर्घ्यं मया दत्तं गायत्री शस्त्ररूपिणी ।
त्वं गच्छ देवि शीघ्रं त्वं दुष्टदैत्यवधं कुरु ॥ ५७८ ॥

सन्ध्याकाले च सम्प्राप्ते घोरे तमसि दारुणे ।
मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति घातितुम् ॥ ५७९ ॥

प्रजापतिकृतः शापः तेषां दैतेयरक्षसाम् ।
अक्षयत्वं शरीराणां मरणं च दिने दिने ॥ ५८० ॥

ततः सूर्यस्य तैर्युद्धं भवत्येव सुदारुणम् ।
ततो द्विजोत्तमास्तोयं प्रक्षिपन्ति महामुने ॥ ५८१ ॥

ओङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते पापाः वज्रभूतेन वारिणा ॥ ५८२ ॥

अग्निहोत्रे हूयते य स मन्त्रप्रथमाहुतिः ।
सूर्योज्योतिः सहस्रांशुः स च दोषोऽत्येति भास्करम् ॥ ५८३ ॥

ततः प्रयाति भगवान् ब्राह्मणैरभिरक्षितः ।
वालखिल्यादिभिश्चैव जगतः पालनोद्यतैः ॥ ५८४ ॥

अस्य श्रीशिरोमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । परमात्मा देवता । गायत्र्याकर्षणे विनियोगः ॥ ओमाप इति मन्त्रं जपेत् ॥

हृदयस्था तु गायत्री हृद्गता मुखनिःसृता ।
हत्वा ह्यादित्यशत्रूंश्च प्रविश्य हृदयं मम ॥ ५८५ ॥ (इति प्रातः)

एहि त्वं देवि शीघ्रं वै गायत्री ब्रह्मरूपिणी ।
जपानुष्ठानसिध्यर्थे प्रविश्य हृदयं मम ॥ ५८६ ॥ (इति मध्याह्ने)

उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ।
उत्तिष्ठ देवि स्थातव्यं प्रविश्य हृदयं मम ॥ ५८७ ॥ (इति सायाह्ने)

सङ्ग्रहे-

प्रत्यक्षरऋषिछन्दोदेवता शक्तिरेव च ।
तत्त्वं वर्णं स्वरं बीजं ध्यानं फलमनन्तरम् ॥ ५८८ ॥

उक्त्वा तु कालकामुद्रा सन्दर्श्य द्वादश क्रमात् ।
सन्ध्या काले तु गायत्र्या अभिमन्त्र्योदकं क्षिपेत् ॥ ५८९ ॥

प्रक्षिपेदूर्ध्वमुखमित्यादित्याभिमुखो भवेत् ।
अनुलोमात् प्रयुज्येत संहारप्रतिलोमतः ॥ ५९० ॥

उपसंहृत्य गायत्रीं पश्चान्मन्त्रैरभिसंहृताम् ।
तत्र मन्त्रान् जपेदन्यान् गायत्र्यास्तुष्टिकारणात् ॥ ५९१ ॥

वर्णानां प्रतिलोम्येन ब्रह्मास्त्रमभिधीयते ।
पदानां प्रातिलोम्येन ब्रह्मशीर्षाभिधं भवेत् ।
तकारमात्रमन्त्यं चेद् ब्रह्मशापं भवेदथ ॥ इति ॥ ५९२ ॥

यद्वा ब्रह्मशिरः षोडशाक्षरमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । परमात्मा देवता । अस्त्रोपसंहारे विनियोगः। 'ध्येयः सदा'इति ध्यानम् । ओमाप इति मन्त्रः ।

उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ।
उत्तिष्ठ देवि स्थातव्यं प्रविश्य हृदयं मम ॥ ५९३ ॥

व्यासः -

आसावादित्यो ब्रह्मेति कृत्वात्मानं प्रदक्षिणम् ।
दैत्यहिंसानिवृत्यर्थम् उपविश्य द्विराचमेत् ॥ ५९४ ॥

मन्देहादिवधार्थाय प्रक्षिपेदुदकाञ्जलिम् ।
प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया ॥ ५९५ ॥

आसावादित्यमन्त्रेण सोदकेनैव पाणिना ।
प्रदक्षिणमुपव्रज्य त्वाचामेत् सन्ध्ययोर्द्वयोः ॥ ५९६ ॥

मध्याह्ने चासावादित्यो यः करोति नराधमः ।
ब्रह्महत्यासमं प्रोक्तं सन्ध्या वै निष्फला भवेत् ॥ ५९७ ॥

आग्नेये -

आदित्याभिमुखस्त्वर्घ्यं दत्वा तीरं समागतः ।
गायत्र्या प्रोक्षयित्वा स्वसमाविति परिक्रमेत् ।
सन्तर्प्य केशवादींश्च गृही स्वाचम्य वै क्रमात् ॥ ५९८ ॥

कूर्मे -

पाणिना जलमादाय स्रवन् कुर्यात् प्रदक्षिणम् ।
आदित्यादिग्रहांस्तत्र तर्पयेत्सुसमाहितः ।
ग्रहान् वाराधिदेवांश्च केशवादींश्च तर्पयेत् ॥ इति ॥ ५९९ ॥

परिषेकं ततः कुर्यात् प्रादक्षिण्यं समाचरेत् ।
सन्तर्प्य केशवादींस्तानाचामं तु समाचरेत् ॥ इति च ॥ ६०० ॥

शुक्लपक्षे केशवादिदामोदरान्तान् ।
कृष्णपक्षे सङ्कर्षणादीन् द्वादशेति सम्प्रदायः ।

विष्णुधर्मोत्तरे -

'शुचिः सन्ध्यामुपासीत कुर्याद्देवर्षितर्पणम् ।'
इति ऋषितर्पणं चोक्तम् ।

'सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥'इति च ॥ ६०१ ॥

गोभिलः -

सन्ध्या येन न विज्ञाता सन्ध्या नैवमुपासते ।
जीवमानो भवेच्छूद्रो मृतः [५०]शौच्येव जायते ॥ ६०२ ॥

५०. श्वाचैव इति स्यात् ।

कूर्मे -

योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय सन्ध्यां प्रणतिं स याति नरकायुतम् ॥ ६०३ ॥

सन्ध्याप्रदेशे सन्ध्यायां सन्ध्यां तत्र समापयेत् ।
अन्यत्र तु जपं कुर्यात् सा सन्ध्या निष्फला भवेत् ॥ ६०४ ॥

जलाशयं समारभ्य यावद्धस्तचतुष्टयम् ।
तावन्नारायणक्षेत्रं मम क्षेत्राधिकं भवेत् ॥ ६०५ ॥

(सन्ध्याफलम्)

अनृतं मद्यगन्धं च दिवास्वापं च सङ्गमम् ।
पुनाति वृषलस्यान्नं सायंसन्ध्या बहिर्जले ॥ ६०६ ॥

व्यासः -

यद् रात्र्यां कुरुते पापं कर्मणा मनसा गिरा ।
तिष्ठन् वै पूर्वसन्ध्यायां प्राणायामैर्व्यपोहति ॥ ६०७ ॥

यदह्नात् कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्व्यपोहति ।
ततो मध्याह्नसन्ध्यायां त्रिषु चासीन एव वा ॥ ६०८ ॥

(स्थलभेदेन जपे फलभेदः)

गृहे तावज्जपं प्रोक्तं गोष्ठे शतगुणं भवेत् ।
सहस्रं पुण्यतीर्थेषु अनन्तं देवसन्निधौ ॥ ६०९ ॥

देवस्य पूर्वदिग्भागे जपमायुष्यवर्धनम् ।
पावके कलहं कुर्याद्दक्षिणे ज्ञानवर्धनम् ॥ ६१० ॥

राक्षसे मरणं कुर्यात् पश्चिमे मोक्षसाधनम् ।
आकर्षणं स्याद् वायव्ये उत्तरे श्रीप्रदायकम् ॥ ६११ ॥

उच्चाटनकरं त्वीशे मध्यमे चार्थसिद्धिदम् ।
देवाग्रे सर्वसिद्धिः स्यादिति स्थानस्य लक्षणम् ॥ ६१२ ॥

सूर्यस्याग्नेर्गुरोरिन्द्रोर्दीपस्य च जलस्य च ।
विप्राणां च गवां चैव सन्निधौ [५१]सम्मुखो जपः ॥ ६१३ ॥

**(आसनभेदेन फले विशेषः)**

धरिण्यां दुःखसम्भूतिः दौर्भाग्यं दारुकासने ।
वंशासने दरिद्रस्तु पल्लवे चित्तविभ्रमः ॥ ६१४ ॥

तृणासने यशोहानिः पत्रासनमशोभनम् ।
वस्त्रासने विधेर्नाशः पाषाणे व्याधिसम्भवः ॥ ६१५ ॥

पुष्पासने दुःखनाशः कम्बले दुःखमोचनम् ।
कृष्णाजिने ब्रह्मवृद्धिः आयुः प्रज्ञा यशोबलम् ॥ इति च ॥६१६॥

'वंशासने दरिद्रः स्यात् पाषाणे व्याधिसम्भवः ।
धरिण्यां दुःखसम्भूतिः दौर्भाग्यं दारुकासने ॥ ६१७ ॥

तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।
कृष्णाजिने ज्ञानसिद्धिः मोक्षश्रीर्व्याघ्रचर्मणि ॥ ६१८ ॥

श्वेतवस्त्रे यशोवृद्धिः सर्वार्थश्चित्रकम्बले ।
नातिदीर्घं नातिह्रस्वमासनं परिकल्पयेत् ॥ ६१९ ॥

---

५१. सन्मुखो

चतुरस्रं समं दार्भमासनं तत् प्रशस्यते ।
पद्मस्वस्तिकपूर्वाणि ह्यासनानि विदो विदुः ॥ ६२० ॥

आसनं शयनं वस्त्रं जायाऽपत्यं कमण्डलम् ।
आत्मानः शुचिरेतानि परेषामशुचिर्भवेत् ॥ ६२१ ॥

(जपपूर्वाङ्गानि)

उपविश्य शुचौ देशे प्राङ्मुखेष्वासनेषु च ।
ऋषिच्छन्देश्वरान् स्मृत्वा प्राणायाममथाचरेत् ॥ ६२२ ॥

सव्याहृतिं सहोङ्कारां गायत्रीं शिरसा सह ।
त्रिःपठेन्नियतात्मा यः प्राणायाममिमं विदुः ॥ ६२३ ॥

वर्णाः षोडश गायत्र्याः शिरस्थानं प्रकीर्तितम् ।
आवर्तयन् सकृद्वापि त्रिरावर्ति महत्फलम् ।
पापं विनश्येत् त्रिविधं प्राणायामपरायणे ॥ इत्याग्नेये ॥ ६२४॥

वायुपुराणे -

आदौ नत्वा गुरून् सर्वान् पश्चाद्वामे च पार्श्वके ।
पापं च पुरुषं ध्यायेत् स्पृष्ट्वा दक्षिणहस्ततः ॥ ६२५ ॥

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम् ॥ ६२६ ॥

तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तस्मश्रुविलोचनम् ॥ ६२७ ॥

खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।
नाभिं स्पृष्ट्वा ततः पश्चाद् वायुबीजमनुस्मरन् ॥ ६२८ ॥

षट्कोणचक्रगं नीलं भगवन्तमनुस्मरन् ।
देहस्थं पापपुरुषं वायुना शोषयेत् पुरा ॥ ६२९ ॥

ततो हृदि करं न्यस्य वह्निमण्डलगं हरिम् ।
त्रिकोणचक्रगं रक्तं भगवन्तमनुस्मरन् ॥ ६३० ॥

देहस्थं पापपुरुषं वह्निनाऽवाहयेत्ततः ।
पश्चान्मूर्ध्नि करं न्यस्य स्थितं वरुणमण्डले ॥ ६३१ ॥

चतुर्दले स्फाटिकाभं स्मृत्वा चामृतवृष्टिभिः ।
आप्लाव्य सकलं देहं प्राणायामं ततश्चरेत् ॥ इति ॥ ६३२ ॥

(गुरु-पूर्वगुर्वादयो नम्याः)

पञ्चसंस्कारसङ्ग्रहे -

गुरूंश्च तद्गुरूंश्चैव तथा सर्वगुरूनपि ।
तथा देवान् समस्तांश्च पश्चान्मूलगुरून्नमेत् ॥ ६३३ ॥

व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ।
ततो नारायणं मूलगुरूनाहुर्विपश्चितः ॥ ६३४ ॥

इति तन्त्रसारे ।

स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरूंस्तथा ।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ॥ ६३५ ॥

इति सङ्ग्रहे ।

गुरुं पूर्वगुरुं मध्वं व्यासं वाणीं सरस्वतीम् ।
प्राणाजौ श्रीहरिं मन्त्रेशं देवं वासुदेवकम् ॥ इति ॥ ६३६ ॥

क्रमस्तु-

देवादितर्पणात् पूर्वं सन्ध्याङ्गत्वेन यो जपेत् ।
गायत्रीमन्यमन्त्रं वा तज्जपं निष्फलं भवेत् ॥ ६३७ ॥

मन्त्रार्घ्यं पूर्वतो दत्वा पश्चान्मन्त्रं जपेत् सुधीः ।
यदन्ते कुरुते चार्घ्यं तत्सर्वं निष्फलं भवेत् ॥ ६३८ ॥

नाराचमुद्रयेन्द्राचक्ष्वित्यादिभिरञ्जसा ।?
कुर्याद् दिग्बन्धनं पश्चाद्भूतोच्चाटनपूर्वकम् ॥ ६३९ ॥

अस्य श्री मम शरीरस्येत्याद्युक्त्वा भूमिशोधनम् ।
'निरस्तः परावसुः' इति पश्चाद्वै तृणमुत्सृजन् ॥ ६४० ॥

इदमहमर्वावसोः सदने सीदामीति विचिन्तयेत् ।
वराहं च तत पश्चाच्छक्तिमाधाररूपिणीम् ॥ ६४१ ॥

कूर्मं शेषं च कालाग्निरुद्रं मण्डूकमेव च ।
भूदेवतां नमस्कृत्य तथा दिक्षु विदिक्षु च ॥ ६४२ ॥

लकारं च वकारं च जपेन्नाराचमुद्रिकाम् ।
प्रदर्शयन् पृथिव्या इत्याद्यैरासनं चरेत् ॥ ६४३ ॥

छोटिकामुद्रया भूमिं स्पृष्ट्वा 'स्वादिष्टये'त्यृचम् ।
त्रिर्जपेत्तु ततः पश्चात् करशुद्धिं समाचरेत् ॥ ६४४ ॥

मणिबन्ध इति मन्त्रेण यं रं वं च जपन् सुधीः ।
गुरुप्रणामं कृत्वाऽथ ध्यात्वा पापं च पूरुषम् ॥ ६४५ ॥

[५२]वामकुक्षेर्नाभिदेशे समाकृष्य विशोषयेत् ।
हृत्पद्मस्थं सुषुम्नाख्यनाडिमार्गेण मूर्धनि ॥ ६४६ ॥

संस्थाप्य देवं हृदये आनयेत् पापपूरुषम् ।
निर्दहेत्तत्र तं पश्चाद् वायुना रेचयेत् सुधीः ॥ ६४७ ॥

आप्लाव्यामृतवृष्ट्याथ सकलं देहमात्मनः ।
हृत्पद्ममानयेद्देवम् उक्तमार्गेण वै पुनः ॥ ६४८ ॥

प्राणानायम्य विधिवन्मातृकान्यासमाचरेत् ।
तत्वन्यासं ततः पश्चाद् गायत्र्यादीन् मनून् जपेत् ॥ ६४९ ॥

मातृकान्यासादिपूर्वं सर्वमन्त्रजपं चरेत् ।
अन्यथा निष्फलमिति ह्याग्नेये प्रतिपादितम् ॥ ६५० ॥

**(जपादौ ऋषिच्छन्दोदेवतास्मरणम् अङ्गन्यासादिकं च कार्यम्)**

भारद्वाजः -

आयात्वित्यनुवाकेन हृदये चार्कमण्डले ।
देवीमावाह्य गायत्रीं ततो ध्यायेत् द्विजोत्तमः ॥ इति ॥ ६५१ ॥

अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीने हरेदायुः ध्यानहीने तु निष्फलम् ॥ ६५२ ॥

---

५२. वामकक्षे

ऋषिहीने महाव्याधिः भवत्येव न संशयः ।
तस्माद्देवर्षिच्छन्दांसि ज्ञातव्यानि महात्मभिः ॥ ६५३ ॥
इति नारदीये ।

श्रीमुष्णमाहात्म्ये -

सर्वच्छन्दोऽभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ॥
सर्वलोकाभिधो ह्येषः तेषां तदुपचारतः ॥ ६५४ ॥ इति वामने ।

(गायत्रीनामको विष्णुः चतुष्पात्)

छान्दोग्ये -

त्रिभिः स्वरूपपादैश्च भिन्नैनैकेन चैव हि ।
गायत्रीनामको विष्णुः चतुष्पात् सम्प्रकीर्तितः ॥ ६५५ ॥
भिन्नपादास्सर्वजीवाः तस्य सादृश्यमात्रतः ।
स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ॥ ६५६ ॥
नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ।
परं ब्रह्मेति भगवान् सर्वज्ञस्सम्प्रकीर्तितः ॥ ६५७ ॥
स एव जीवस्य बहिर्हृदयाकाश आस्थितः ।
योऽयं हृदयगः सोथ जीवान्तर्व्याप्य संस्थितः ॥ ६५८ ॥
व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः ।
एवं चापि चतुष्पात्त्वं वासुदेवस्य कीर्तितम् ॥ ६५९ ॥ इति ।

(गायत्रीनामको विष्णुः षड्विधः)

गायत्र्यां संस्थितो विष्णुः स्त्रीरूपो सूर्यसप्रभः[५३] ।
द्वितीयश्चैव मत्स्यादिर्भूतनामाऽवतारगः ॥ ६६० ॥

५३. सूर्यसम्भवः

तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः ।
चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः ॥ ६६१ ॥

जीवस्यान्तर्गतो व्याप्य शरीरमिति नामकः ।
पञ्चमः तद्धृदिस्थश्च षष्ठो हृदयनामकः ॥ ६६२ ॥

शंत्वाच्च रतिरूपत्वादीरणात्समुदीरितः ।
गायत्रीनामको विष्णुरेवं षड्विध उच्यते ॥ ६६३ ॥ इति च ।

उक्तः षड्विधो विष्णुर्गायत्रीषडंशप्रतिपाद्यः-

**(त्रेधा गायत्रीनिष्पत्तिः)**

अष्टाक्षरस्य त्रिवारोच्चारणेन गायत्री अभिव्यक्ता । अथवा द्वादशाक्षरस्य द्विरावत्त्या गायत्री निष्पद्यत इति द्वितीयः पक्षः । व्याहृतिभिः व्यस्तसमस्तैः अष्टाक्षरव्याहृतौ त्रिवारमुच्चार्यमाणायाम् इति तृतीयः पक्षः । प्रथमोच्चारणेन प्रथमः पादः । द्वितीयोच्चारणेन द्वितीयः पादः । तृतीयोच्चारणेन तृतीयः पादः । वर्णप्रतिपाद्याः केशवादिकृष्णान्ताः भगवद्रूपविशेषाः अष्टाक्षरप्रतिपाद्यैः विश्वादिभिः द्वादशाक्षरप्रतिपाद्यैः केशवादिभिः व्याहृतिप्रतिपाद्यैः वासुदेवादिभिश्चाभि-व्यक्ताः ॥

**(गायत्री चतुष्पदा त्रिपदा च भवति)**

चतुष्पदा गायत्रीप्रणवेन सह । प्रणवं विना त्रिपदा । प्रणवप्रतिपाद्यः व्याहृतितृतीयपादप्रतिपाद्यः समग्रव्याहृतिप्रतिपाद्यः नवावरणसहितब्रह्माण्ड-व्यापी सकलचेतनान्तर्गतमुख्यप्राणव्यापी सङ्कर्षणः । प्रणवप्रतिपाद्यः समग्र-व्याहृतिप्रतिपाद्यः समग्रगायत्रीप्रतिपाद्यः सर्वव्यापी श्रीवासुदेवः ।

अथवा श्वेतद्वीपानन्तासनवैकुण्ठसर्वजीवान्तस्थानि चत्वारि रूपाणि

गायत्रीपादचतुष्टयप्रतिपाद्यानि । अथवा स्वरूपबाह्यदेहहृदयस्थानि चत्वारि रूपाणि प्रतिपाद्यानि । गायत्रीमुखेऽग्र्यन्तर्गतपरशुरामो वर्तते । एवं ज्ञाने गायत्री सफला भवेत् । तदाभावे निष्फला । समग्रगायत्रीप्रतिपाद्यः समस्त-जगत्सर्जकत्वात् सवितृनामको नारायणः । केशवादीनां नानायुधधारिणाम् अभेदो ग्रन्थान्तरोक्तः । ग्रन्थगौरवभयान्नात्रोच्यते । तन्त्रसारे-

(गायत्रीप्रतिपाद्यकेशवादिचतुर्विंशतिरूपलक्षणानि)

शङ्खचक्रगदाब्जेतः केशवः सूर्यसन्निभः ।
नारायणः साब्जगदाचक्रशङ्खो रविप्रभः ॥ ६६४ ॥

माधवश्चक्रशङ्खाब्जगदेतो सरविप्रभः ।
गदाब्जशङ्खचक्रेतो गोविन्दो भास्करद्युतिः ॥ ६६५ ॥

कञ्जकम्बुचक्रगदायुतो विष्णू रविप्रभः ।
सशङ्खाब्जगदाचक्रः सूर्याभो मधुसूदनः ॥ ६६६ ॥

त्रिविक्रमः गदाचक्रशङ्खपद्मो रविप्रभः ।
वामनोऽरिगदापद्मशङ्खउद्यद् रविप्रभः ॥ ६६७ ॥

श्रीधरोऽरिगदाकञ्जपद्मउद्यद्रविद्युतिः ।
सारिपद्मः शङ्खगदो हृषीकेशोऽर्कसन्निभः ॥ ६६८ ॥

पद्मनाभः साब्जचक्रगदाशङ्खो रविद्युतिः ।
दामोदरः शङ्खगदाचक्रपद्मो रविद्युतिः ॥ ६६९ ॥

**'वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।**
**चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ॥**

**सचक्रशङ्खस्त्वपरः तृतीयः शार्ङ्गबाणवान् ।**
**सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ॥'**

शङ्खाब्जारिगदो सूर्यप्रभः सङ्कर्षणो विभुः ।
शङ्खचक्रकञ्जगदो वासुदेवो रविप्रभः ॥ ६७० ॥

प्रद्युम्नो रविभश्शङ्खगदाब्जारिधरो हरिः ।
अनिरुद्धो गदाशङ्खपद्मचक्री रविप्रभः ॥ ६७१ ॥

पद्मशङ्खगदाचक्री सूर्याभः पुरुषोत्तमः ।
रविप्रभो गदाशङ्खचक्राब्जेतो ह्यधोक्षजः ॥ ६७२ ॥

सूर्याभो नृहरिः पद्मगदाशङ्खारिसंयुतः ।
सूर्याभोऽच्युतनामाब्जचक्रशङ्खगदायुधः ॥ ६७३ ॥

जनार्दनश्चक्रशङ्खगदाब्जेतो रविद्युतिः ।
उद्यदर्कनिभोपेन्द्रो गदाचक्राब्जशङ्खयुक् ॥ ६७४ ॥

सारिपद्मगदाशङ्खो हरिः प्रोद्यद् रविप्रभः ।
उद्यदर्कनिभः कृष्णो गदापद्मारिशङ्खभृत् ॥ ६७५ ॥

**(गायत्र्यां चतूरूपो विष्णुरुपास्यः)**

ॐ भूः भुवः स्वः मह इति व्याहृतौ अस्माकं योग्यता नास्ति । 'ओम्' इत्यनेनानन्तगुणोदीर्णः प्रतिपाद्यः । व्याहृतेः भूरिति शिरः । तस्य पृथिव्यग्नि ऋक्प्राणस्थोऽनिरुद्धः प्रतिपाद्यः । भुव इति बाहू । तस्यान्तरिक्षवायु-

सखाऽपानस्थः प्रद्युम्नः प्रतिपाद्यः । सुवरिति पादद्वयम् । तस्य द्युनामकादित्य-यजुर्वेदव्यानस्थः सङ्कर्षणः प्रतिपाद्यः । मह इति मध्यदेहः । तस्यादित्य-चन्द्रवेदराश्युदानस्थः वासुदेवः प्रतिपाद्यः इत्येकः प्रकारः । भूरित्यस्य पृथिव्यन्तरिक्षद्युस्थितः सङ्कर्षणः प्रतिपाद्यः । भुव इत्यस्य अग्निवाय्वादित्यस्थः प्रद्युम्नः प्रतिपाद्यः । सुवरित्यस्य ऋग्यजुःसामवेदस्थानिरुद्धः प्रतिपाद्यः । इति जपकरणसमये इतिकर्तव्यताप्रकारः । पृथिव्यादिसर्वजगत् सत्यनामक-शेषाधेयत्वेन वर्तते । सत्यनामभारती बलनामकवाय्वाधेयत्वेन वर्तते । बलनामकवायुः गायत्रीनामकलक्ष्म्याधेयत्वेन वर्तते । गायत्रीनामकलक्ष्मी गायत्रीनामकविष्ण्वाधेयत्वेन वर्तते । स तु स्वतन्त्र इति ।

गायत्री चतुर्विंशत्यक्षराणां केशवादिचतुर्विंशतिरूपाणि प्रतिपाद्यानि ।

### (गायत्र्युपासनाफलम्)

गायत्र्या गायत्रीनामकभगवान् प्रतिपाद्यः । गायत्रीमुखे अग्न्यन्तर्गत-परशुरामः । पृथिव्यन्तरिक्षं द्यौरित्यष्टवर्णप्रतिपाद्योऽनिरुद्धस्तत्सवितुर्वरेण्य-मित्यस्य प्रतिपाद्यः । तेनोपासनेन चतुर्मुखः पृथिव्यादिसर्वलोकाधिपत्यं प्राप्त-वान् । ऋचो यजूंषि सामानीत्यष्टवर्णप्रतिपाद्यः प्रद्युम्नः । भर्गो देवस्य धीमहि इत्यस्य प्रतिपाद्यः । तेनोपासनेन ब्रह्मा सर्ववेदप्रतिपाद्यत्वमाप्तवान् । प्राणोऽ-पानः व्यान इत्यष्टवर्णप्रतिपाद्यः सङ्कर्षणः धियो यो नः प्रचोदयात् इत्यस्य प्रतिपाद्यः । तेनोपासनेन हिरण्यगर्भः सर्वजीवोत्तमत्वं प्राप्तवान् । 'परोरजा' इत्यस्य प्रतिपाद्यः । ओमिति गायत्रीपादप्रतिपाद्यः । तेनोपासनेन कमलजः सायुज्यं प्राप्तवान् इत्येकः प्रकारः ॥

ब्रह्मादिदेवाः गायत्रीप्रथमपादप्रतिपाद्याः । श्वेतद्वीपस्थनारायणो

द्वितीयपादप्रतिपाद्यः । अनन्तासनस्थवासुदेवः तृतीयपादप्रतिपाद्यः । वैकुण्ठस्थवैकुण्ठः ओमिति चतुर्थपादप्रतिपाद्यः इत्येकः प्रकारः ।

बाह्याकाशस्थ आकाशनामकः गायत्रीप्रथमपादप्रतिपाद्यः । स्थूलदेहस्थित आकाशस्थाकाशनामकः द्वितीयपादप्रतिपाद्यः । जीवस्वरूपदेहस्थिताकाशस्थाकाशनामकः तृतीयपादप्रतिपाद्यः । जीवस्वरूपहृदिस्थिताकाशस्थिताकाशनामकः ओमिति चतुर्थपादप्रतिपाद्य इत्येकः प्रकारः ।

अथ षट्पदगायत्रीप्रकारः । तत्सवितुरित्यस्य सूर्यसप्रभः गायत्रीनामकभगवान् प्रतिपाद्यः । वरेण्यमित्यस्य मत्स्यादि अवताररूपाणि प्रतिपाद्यानि । भर्गो देवस्येत्यस्य सर्वजीववाक्स्थितहयग्रीवनामकभगवद्रूपाणि प्रतिपाद्यानि । धीमहीत्यस्य समस्तपृथिवीपरमाणुगतपीतरूपगतधरानामकभगवद्रूपाणि प्रतिपाद्यानि ।। धियो यो न इत्यस्य सर्वशरीरस्थितसर्वशरीरनामकभगवद्रूपाणि प्रतिपाद्यानि । प्रचोदयादित्यस्य सर्वजीवहृदिस्थितहृदयनामकभगवद्रूपाणि प्रतिपाद्यानि इत्येकः प्रकारः ।

**(सप्तविधसामोपास्तिप्रकारः)**

उदयात्पूर्वं हिङ्कारनामकप्रद्युम्नः । उदयवेलायां प्रस्तावनामको वासुदेवः । उदयानन्तरम् आदित्यनामकवराहः । मध्याह्ने उद्गीथनामकनारायणः । अपराह्ने प्रतिहारनामकानिरुद्धः । सङ्गवे उपद्रवनामकनरसिंहः । सायङ्काले निधननामकसङ्कर्षणः ।। इति ।

एवमभिमुखां गायत्रीं श्रीधरं हृदि पश्यन् प्रीत्या पुलकितसर्वाङ्गः सन् मन्त्रेण स्तौति- **ओजोसीति** ।। एवमोजोसीत्यादिना स्तुत्वा त्रिरूपगायत्र्याह्वानं करोति- **गायत्रीमिति** ।।

आग्नेये-

आवाह्याथ च गायत्रीम् आयात्वित्यनुवाकतः ।।
ऋषिच्छन्दो देवताश्च स्मृत्वा सम्यक् चरेद् बुधः ।।६७६।।इति ।

(जपलक्षणम्)

जकारो जन्मविच्छेदः पकारः पापनाशनः ।
तस्माज्जप इति प्रोक्तः जन्मपापविनाशनः ।। ६७७ ।। इति च ।।

ओङ्कारः पूर्वमुच्चार्यो भूर्भुवस्वस्तथैव च ।
गायत्रीप्रणवश्चान्ते जप एष उदाहृतः ।। ६७८ ।।

समाधानमतिर्यस्तु जपं कुर्यात् कुरूद्वह ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ।। ६७९ ।।

(गायत्रीजपसङ्ख्याभेदेन फलभेदः)

अष्टोत्तरशतं यस्तु गायत्रीं वेदमातरम् ।
जपेत् प्रयत्नतो राजन् तस्य पुण्यफलं शृणु ।। ६८० ।।

दिने दिने तु यत्किञ्चिद् ज्ञानाज्ञानकृतं च यत् ।
तत्सर्वं विलयं याति पातकं पापवर्जितः ।। ६८१ ।।

अष्टोत्तरसहस्रं यो गायत्रीं लोकवन्दिताम् ।
जपेत् तस्य फलं वक्ष्ये शृणु नान्यमना प्रभो ।। ६८२ ।।

षण्मासात् सर्वपापेभ्यो मुच्यते नात्र संशयः ।
अपत्यधनरत्नानि पशुक्षेत्रं च भारतीम् ।। ६८३ ।।

जपन् मनोर्लभेद् विद्वान् गायत्र्यास्तु प्रभावतः ।
गायत्र्या न समः किञ्चित् त्रिषु लोकेषु सुव्रत ।। ६८४ ।।

गायत्री मोक्षदा ज्ञेया गायत्री पापनाशिनी ।
स्वर्गलोकप्रदा देवी ब्रह्मलोकप्रदायिनी ॥ ६८५ ॥

रुद्रलोकप्रदा यैव सूर्यलोकप्रदा तु सा ।
ध्रुवलोकप्रदा देवी चन्द्रलोकप्रदा तु सा ।
मम लोकं तु कौन्तेय गायत्री सम्प्रयच्छति ॥ ६८६ ॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
गायत्री सेव्यते येन तप्तं तेनाखिलं तपः ॥ ६८७ ॥

गायत्रीं भजते यस्तु मन्मना हि महीपते ।
गन्धर्वैः स्तूयमानस्तु मम लोकं स गच्छति ॥६८८॥ इति शेषधर्मे ।

गायन्तं त्रायते यस्मात् गायत्रीत्युच्यते बुधैः ।
सऋषिच्छन्ददैवत्यं सन्याससहमुद्रिकाम् ॥ ६८८ ॥

सन्ध्यामेनां सहवर्णां सरूपां सहवाहनाम् ।
त्रिमूर्तिरूपां गायत्रीं त्रिसन्ध्यां यो जपेच्छुचिः ।
सर्वबन्धविनिर्मुक्तो विष्णुलोके महीयते ॥ ६८९ ॥ इत्याग्नेये ।

'प्रभाते रविबिम्बस्थां रक्तवर्णां कुमारिकाम्
हंसारूढां साक्षमालाम् ऋग्वेदां ब्रह्मदैवताम् ।
मध्यन्दिने तु सावित्रीं रविबिम्बस्थितां सिताम्
शामां त्रिनेत्रां शूलाढ्यां ध्यायेद् वृषभसंस्थिताम् ॥ ६९० ॥

यजुर्वेदमयीं रुद्रदैवत्यां पाण्डुनन्दन ॥
सायं सरस्वतीं सूर्यमध्यस्थां कृष्णवर्णनीम् ॥ ६९१ ॥

वृद्धां चतुर्भुजां शङ्खचक्रपक्षीन्द्रवाहनाम् ।
सामवेदमयीं विष्णुदैवत्यां क्रमशो जपेत्' ॥ ६९२ ॥ इति ॥

गायत्रीं तु परित्यज्य योऽन्यं मन्त्रमुपासते ।
मण्डूकरावास्ते ज्ञेया इति वेदविदो विदुः ॥ ६९३ ॥ इति चाग्नेये ।

हृदयेऽष्टदलं पद्मं कर्णिकामध्यशोभितम् ।
ओङ्कारनालं विलसत् वेदगम्भीरनिःस्वनम् ॥ ६९४ ॥

तन्मध्ये नवरत्नाढ्यं तप्तहाटकसन्निभम् ।
[५४]तस्योपरिष्टाच्चतुरं नानारत्नविभूषितम् ॥ ६९५ ॥

विद्रुमस्फटिकाकारशतस्तम्भसमन्वितम् ।
सूर्यकोटिप्रतीकाशं विमानेन विराजितम् ॥ ६९६ ॥

मुक्तादामविभूषाढ्यं चित्रध्वजपताकिनम् ।
मल्लिकाकुन्दमन्दारकेतकीचम्पकादिभिः ॥ ६९७ ॥

अन्यैश्च गन्धपुष्पैर्वा समन्तादवकीर्णितम् ।
महाशाखास्फुरत्पुष्पं कल्पवृक्षान्तरस्थितम् ॥ ६९८ ॥

एतन्मण्टपमध्यस्थं स्वर्णपद्मोपरि स्थिते ।
सिंहासने समारूढं सूर्यकोटिसमप्रभम् ॥ ६९९ ॥

विष्णुं चतुर्भुजं लक्ष्मीभूमिभ्यां पार्श्वशोभितम् ।
किरीटहारकेयूरकुण्डलैर्मण्डिताकृतिम् ॥ ७०० ॥

---

५४. तस्योपरिष्टचत्वारम्

कटिसूत्रं ब्रह्मसूत्रं नूपुरैरुपशोभितम् ।
श्रीवत्सवनमालाढ्यं तुलसीदामभूषितम् ॥ ७०१ ॥

अनेकदिव्याभरणं कनकाभरणोज्वलम् ।
वरदाभयहस्ताढ्यं शङ्खचक्रस्फुरत्करम् ॥ ७०२ ॥

पीताम्बरधरं विष्णुं प्रसन्नवदनाम्बुजम् ।
महोदरं दयामूर्तिं मन्दहासमुखाम्बुजम् ॥ ७०३ ॥

अणिमाद्यैर्मूर्तिमद्भिः अष्टैश्वर्यैरुपाश्रितम् ।
बद्धाञ्जलिपुटैर्भक्तैः ब्रह्मरुद्रादिभिः सुरैः ॥ ७०४ ॥

गायद्भिः नारदाद्यैश्च सनकाद्यैश्च शोभितम् ।
स्तुतं परमकल्याणं सूतमागधबन्दिभिः ॥ ७०५ ॥

अनेककनकाभरणकरकङ्कणशोभितम् ।
दिव्यश्रीपादयुग्मेन मन्दपार्श्वद्वये हरिम् ॥ ७०६ ॥

स्वर्णदण्डविचित्राभ्यां चामराभ्यां विराजितम् ।
माधवं परमात्मानं भक्तवत्सलमीश्वरम् ।
ध्यात्वैवं हृदये सूर्यमण्डले माधवं जपेत्' ॥ ७०७ ॥ इति ।

(त्रिविधो जपः)

वाचिकं च तथोपांशु मानसं च जपत्रिकम् ।
उत्तरोत्तरमुत्कृष्टं सर्वपापप्रणाशनम् ॥ ७०८ ॥

स्वरत्रयसमायुक्तो वर्णव्यक्तपदो जपः ।
स वाचक इति ख्यातो बहुशोच्चरितो नृप ॥ ७०९ ॥

ईषदुच्चरितो राजन् किञ्चदोष्टौ प्रचाल्य च ।
स उपांशुरिति विख्यातः किञ्चिच्छब्दयुतो नृप ।
मानसो मनसा चिन्त्यो ध्यात अज्ञातवर्णवान्' ॥ ७१० ॥ इति ॥

न जल्पन् न हसन् न शब्दं दर्शयन् नृप ।
न सञ्चरन् न चाक्रम्य न चलन् नावलोकयन् ॥ ७११ ॥

[55]न चलासनमाक्रम्य नापवित्रकरद्वयः ।
उदये प्राङ्मुखस्तिष्ठन् सङ्ख्ययैव जपेद् बुधः ॥ ७१२ ॥

**(पर्वभिः सङ्ख्यागणनं कार्यम्)**

असङ्ख्यातोऽपवित्रश्च जपो निष्फलतां व्रजेत् ।
पर्वभिर्गणयेत् सङ्ख्यां नाक्षमालादिभिर्नृप ॥ ७१३ ॥

गायत्री वेदमूलत्वात् वेदः पर्वसु गीयते ।
आरभ्यानामिकामध्यपर्वप्रादक्षिणक्रमात् ॥ ७१४ ॥

तर्जनीमूलपर्यन्तं सङ्ख्यया त्रिपदीं जपेत् ।
मध्यपर्वद्वयं मेरुस्तं मेरुं नातिलङ्घयेत् ॥ ७१५ ॥

व्यस्तपादान्तगायत्रीं यो जपेत्स हरिः स्मृतः ।
जपेत्समस्तपादां यः स भवेद् ब्रह्मराक्षसः ॥ ७१६ ॥

अष्टोत्तरसहस्रं वा ब्राह्मण्यार्थं समश्नुते ।
पश्चाद्वैश्यो भवेद् विप्रो क्षयरागीह जायते ।?
तस्मात् स्नात्वा यथाशक्ति जपेदाभास्करोदयम्' ॥ ७१७ ॥
इति चाग्नये ॥

---

५५. न चालसनमाक्रम्य

ओमित्येकाक्षरं ब्रह्म अग्निर्देवता ब्रह्म इत्यार्षम् । गायत्रं छन्दः परमात्मं स्वरूपं सायुज्यं विनियोगम् ॥

आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम् ।
गायत्री छन्दसां मातेदं ब्रह्म जुषस्व मे ॥ ७१८ ॥

यदह्नात् कुरुते पापं तदह्नात्प्रति मुच्यते ।
यद्रात्र्यात् कुरुते पापं तद्रात्र्यात् प्रति मुच्यते ।
सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वती ।
ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि
देवानां धामनामाऽसि विश्वमसि विश्वायुः ।
सर्वमसि सर्वायुः अभिभूरोम्
गायत्रीमावाहयामि ।
सावित्रीमावाहयामि ।
सरस्वतीमावाहयामि ।
छन्दर्षीनावाहयामि ।
श्रियमावाहयामि ।
बलमावाहयामि ।

गायत्र्याः गायत्रीछन्दः । गाधीपुत्रो विश्वामित्र ऋषिः । सविता देवता । अग्निर्मुखम् । ब्रह्मा शिरः । विष्णुर्हृदयम् । रुद्रः शिखा । पृथिवी योनिः । प्राणोऽपानव्यानोदानसमानसप्राणा श्वेतवर्णसाङ्ख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः । पञ्चवर्णपञ्चशीर्षोपनयने विनियोगः ॥

अर्घ्यार्थोदके कनिष्ठाङ्गुल्या व्याहृतियन्त्रं विलिख्य अर्घ्यं दद्यात् ।

ओङ्कारं पुरुषं विद्यात् गायत्री वधुरुच्यते ।
उभयोस्सङ्गसौख्यार्थं वस्त्रेणाणाच्छादयेद् बुधः ॥ ७१९ ॥

नित्यादर्धं चतुर्थीषु सुमनुतिथिषु स्याज्जपः सप्तमीयां
सप्तत्रिंशत्प्रतिपदि च पुनः षड्युतः त्रिंशदेव ।
एवं पर्वद्वयेऽपि त्रियुतदशदिने चाष्टयुग्विंशतिर्वा
एवं विश्वादिकालेऽप्यखिलमुनिमतं सायमेवं न काल्ये ॥ ७२० ॥

श्राद्धे दर्शे प्रदोषे च गायत्रीदशसङ्ख्यया ।
अष्टाविंशत्यनाध्याये सुदिनं तु यथाक्रमम् ॥ ७२१ ॥ इति ।

स्वाध्यायजपहोमादीनाशौची वर्जयेत् सदा ।
सन्ध्यां तु मनसा कुर्यादर्घ्यमात्रं समन्त्रकम् ॥ ७२२ ॥

इति षडशीत्याम् ।

गायत्र्यादौ स्थितदेवानाह अग्निर्मुखमिति । गायत्र्या मुखेऽग्न्यन्तर्यामी परशुरामः । शिरसि ब्रह्मान्तर्यामी नारायणः । हृदये विष्णुः । शिखायां रुद्रान्तर्यामी सङ्कर्षणः । योऽसौ पृथिवीकुक्षिस्थो वराहः । प्राणादिशब्दवाच्यभगवद्रूपप्राणादिमन्ती । सप्राणा मुख्यप्राणनियामिका । साङ्ख्यायनसगोत्रा साङ्ख्यायनसगोत्रेऽभिव्यक्ता । चतुर्विंशत्यक्षरा चतुर्विंशत्यक्षरप्रतिपाद्यकेशवादिरूपा । त्रिपदा पादत्रयप्रतिपाद्यानिरुद्धादिरूपा । प्राग्दक्षिणपश्चिमोदीच्योर्ध्वाधोभागदेवतासहिता एवंविधा गायत्री पञ्चवर्णा पञ्चशीर्षा इति उपनयने उपनयनाख्ये कर्मणि विनियुज्यत इति विनियोगः ।

(मन्त्रजपः तुळसीकाष्ठादिमणिमालया कार्यः)

ततः प्राणायामं कृत्वा गायत्रीं जपेत् ।
*तुलसीकाष्ठमणिना निर्मितेन प्रयत्नतः ।
गायत्र्यादिजपं कुर्यात् तस्य नास्ति महद्भयम् ॥ ७२३ ॥

(सदाचारस्मृतिः)

**गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।**
**प्रणम्य देवान् विप्रांश्च गुरूंश्च हरिपार्षदान् ।**
**एवं सर्वोत्तमं विष्णुं ध्यायन्नेवार्चयेद् हरिम् ॥ १० ॥**

**ध्यानप्रवचनाभ्यां च यथायोग्यमुपासनम् ।**
**धर्मेणेज्यासाधनानि साधयित्वा विधानतः ॥ ११ ॥**

(नारायणाष्टाक्षरमन्त्रमहिमा)

ब्रह्माण्डे

नमो नारायणायेति नित्यमोङ्कारपूर्वकम् ।
जपन्नष्टाक्षरं मन्त्रं सद्यः सिद्धिमवाप्स्यसि ॥ ७२४ ॥

नानेन सदृशो मन्त्रो वदतन्त्रेषु विद्यते ।
सारोऽयं सर्वविद्यानां मूलमन्त्रश्च कीर्तितः ॥ ७२५ ॥

जगतः कारणत्वं च सृष्टिस्थितिलयेषु च ।
हेतुत्वं मोक्षदत्वं च मन्त्रेऽस्मिन् मम दर्शितम् ॥ ७२६ ॥

उपायत्वमुपेयत्वं साध्यत्वं सिद्धतामपि ।
मम वक्ति हि मन्त्रोऽयं तस्मात्प्रियतरो मम ॥ ७२७ ॥

* इदं ब्रह्मगायत्रीविषयकम् । विश्वामित्रगायत्रीजप अङ्गुलिपर्वसु कार्य इत्युक्तम् ।

सृज्यत्वं चेतनत्वं च सर्वत्र परतन्त्रताम् ।
संसारमपवर्गं च वक्ति जीवस्य मन्त्रराट् ॥ ७२८ ॥

अनेन क्रियते *मन्त्रेणात्मनः परमात्मनः ।
निवेदनं परब्रह्मन् मद्भक्तेषु च शाश्वतम् ॥ ७२९ ॥

भोग्यान् मनोरथान् स्वर्ग्यान् मुक्तिमप्यतिदुर्लभाम् ।
साधयिष्यन्त्यनेनैव मूलमन्त्रेण मामकाः ॥ ७३० ॥

अनष्टाक्षरतत्वज्ञैरतपस्विभिरावृतैः ॥
दुर्दर्शोऽहं जगद्धातर्मद्भक्तिविमुखैरपि'** ॥ ७३१ ॥ इति ।

तत्रैव ब्रह्माण्डे-

मन्त्रान्तरेषु निष्णातः सप्तजन्मनि मानवः ।
जायतेऽधिकतो विप्रः सावित्र्या ब्राह्मणोत्तमः ॥ ७३२ ॥

सावित्रीमन्त्रसारो यः सप्तजन्मनि मानवः ।
अनूचानः श्रोत्रियो वा क्रतुष्वधिकृतो भवेत् ॥ ७३३ ॥

अधीतवेदो यज्वा च वर्णाश्रमपरायणः ।
अनन्यमन्त्रनिरतो मद्भक्तो मज्जनप्रियः ॥ ७३४ ॥

द्वादशाक्षरनिष्णातः क्रमेण स भविष्यति ।
द्वादशाक्षरनिष्ठानां मामकानां महात्मनाम् ॥ ७३५ ॥

अहमेव गतिस्तेषां नान्यं दैवं भजन्ति ते ।
अतिपापप्रसक्तोऽपि नाधोगच्छति मत्परः ॥ ७३६ ॥

---

* मन्त्रेणासनः ** विमुखोऽपि

न चापि जायते तस्य मनः पापेषु कर्हिचित् ।
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ॥ ७३७ ॥

सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ।
न वासुदेवभक्तानाम् अशुभं विद्यते क्वचित् ॥ ७३८ ॥

जन्ममृत्युजराव्याधिभयं नैवोपजायते ।
तस्मात्सर्वात्मना ब्रह्मन् मद्भक्तो दीक्षितो भव ॥ ७३९ ॥

मत्कर्मकन्मत्परमो मामेवैष्यति शाश्वतम् ।
अन्यकर्मकरो मर्त्यो भ्रष्टो गच्छत्यधोगतिम् ॥ ७४० ॥

मकर्मपरमो भक्तो नाधः पतति कर्हिचित् ।
भावेन पुण्यं मद्भक्त्या पातकं च विधूयते ।
द्वादशाक्षरनिष्णातः प्रयाति परमं पदम् ॥ ७४१ ॥ इति ॥

**(अष्टौ महामन्त्राः नित्यं जप्याः)**

प्रणवोऽष्टाक्षरो मन्त्रो व्याहृतिद्वादशाक्षरः ।
गायत्री मातृकामन्त्रो पुंसूक्तस्तु षडक्षरः ।
एते ह्यष्टमहामन्त्राः जप्याः नित्यं द्विजोत्तमैः ॥ ७४२ ॥

गायत्री सेव्यते यद्वदेते सेव्या मनीषिभिः ।
देवार्चनादिकं सर्वमन्यथा निष्फलं भवेत् ॥ ७४३ ॥

**(प्रणवादिमन्त्रजपः कार्यः)**

अत्र प्रणवः सन्यासिभिरेव जप्यः, नेतरैरिति केचित् ।
इतरैरपि प्रणवः सङ्कोचेन जप्य इति केचित् ।

गायत्र्याः त्रिगुणमष्टाक्षरं व्याहृतिं च जपेत् । द्वादशाक्षरं तु द्विगुणम् । मातृकामन्त्रं तु समग्रम् ।

त्रिरावर्तनयोगादेको जप इत्युक्तप्रकारेण यथाशक्ति जपेत् । पुंसूक्तं तु प्रतिऋचमुक्तक्रमेण जपेत् । समग्रमिति केचित् । विष्णुषडक्षरं तु गायत्र्याश्चतुर्गुणं जपेदिति सम्प्रदायविदः । एवं कृष्णषडक्षरमन्त्रोऽपि जप्यः। एवमन्येऽपि हंसमन्त्रादयो मन्त्रास्तन्त्रसारोक्तास्सर्वे सर्वैर्जप्या एव ।

(स्त्रीणां मन्त्रजपक्रमः)

स्त्रीणामपि गुरुमन्त्रजपः कृष्णमन्त्रजपो राममन्त्रजपो नामत्रयमन्त्रजपश्च स्मृतिविहित एव । केशवादित्रिभिर्नामभिराचमनमात्रं स्मृतिविहितमेव । मन्त्रादावोङ्कारः स्त्रीभिर्नैवोच्चारणीयः । श्रुतिस्मृतिनिषिद्धत्वात् । तस्माच्छ्रीकारपूर्वको मन्त्रजपः स्त्रीणां विहित इति सम्प्रदायविदः ।

सन्ध्योपास्त्यनन्तरमष्टमहामन्त्रजपः कार्य इति सतां मतम् । गायत्रीजपानन्तरं गायत्र्युद्वासनादिकं कार्यम् ।

(गायत्र्युद्वासनक्रमः)

तदुक्तमाग्नेये -

उद्वासयेत्तु गायत्रीमुत्तमेत्युदिते रवौ ।
प्रादक्षिण्यं नमस्कुर्याच्चतुस्सन्ध्यादिदेवताः ॥ ७४४ ॥

सन्ध्या च सा च गायत्री सावित्री च सरस्वती ।
चतुर्थ्या च नमस्कुर्यात् प्रणवादिनमोऽन्तकम् ॥ ७४५ ॥

मित्रस्येत्युदितं सूर्यमुपतिष्ठेत्तु पूर्वकम् ।
श्रौतैः स्मार्तैस्तथा सौरैः मन्त्रैर्नानाविधैरपि ॥ ७४६ ॥

अभीष्टदं नमस्कुर्याद्भास्करं भवभञ्जनम् ।
सर्वाभ्यो देवताभ्यश्च कामोऽकार्षीति संनमेत् ॥ ७४७ ॥?

दिशश्चतस्रः प्राच्याद्याः प्रणवादि नमोन्तकम् ।
चतुर्थ्यन्तैर्नमस्कुर्यादूर्ध्वाधस्संज्ञके दिशि ॥ ७४८ ॥

अन्तरिक्षं च भूमिं च दण्डवत्प्रणमेत्ततः ।
एवं यः कुरुते विद्वान् गायत्रीजपमुत्तमम् ।
ब्रह्महाऽपि जयेत्स्वर्गं किमुत ब्रह्मवादिनः ॥ ७४९ ॥

*एकाहं जपहीनश्च सन्ध्याहीनो दिनत्रयम् ।*
*द्वादशाहमनग्नीकः शूद्र एव न संशय इति ॥ ७५० ॥*

प्रातर्मुखसमं कुर्यान्मध्याह्ने हृदयं समम् ।
सायं नाभिसमं विद्वान् गायत्रीजपमुत्तमम् ॥ ७५१ ॥

उत्तमेति गायत्र्युद्वासनमन्त्रस्य वामदेव ऋषिः । अनुष्टुप् छन्दः । लक्ष्मीर्गायत्री च देवते ॥

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥

*एवं सर्वदेवनमस्कारानन्तरं सूर्यं नमस्कुर्यात् ।*

**(दिग्देवाः नम्याः)**

तदुक्तमाग्नेये -

अभिवादनमन्त्रेण स्वगोत्रं नाम शर्म च ।
उक्त्वाऽभिवादयेत् सूर्यमहं भो इति संस्मरेत् ॥ ७५२ ॥

अत्र प्राच्यादिशब्देन तत्तद्दिग्देवताः ग्राह्याः ।

प्राच्यः प्राणस्तथेन्द्राद्याः *दक्षिणे च यमादयः ।
प्रतीच्याः वरुणाद्यास्तु सोमाद्याः उत्तरा स्मृताः ॥ ७५३ ॥

शेषमित्राववाचीनाविन्द्रकामावुदक्तनू ॥
सभार्यकोणपैस्सार्धं चत्वारो दिशि दिश्यपि ॥' ७५४ ॥ इति ॥

तस्य विवरणम् -

**पूर्वदिग्देवता** इन्द्रः शची । आभ्यामुपास्यमानो वामनः । द्वितीयानपगमः। हयग्रीवः नारायणोऽनिरुद्धः । प्रतिहारनामकोऽनिरुद्धः । पवमाननामक-नारायणः प्रद्युम्नः । प्रकाशनामकः वासुदेवः वासुदेवव्यूहः । प्राणनामकः शेषः। अपाननाम्नी भारती । व्याननामकः वायुः । उदाननाम्नी रमा । समान-नामकः नारायणः ॥

**आग्नेये** - अग्निः स्वाहा आभ्यामुपास्यमानो परशुरामः ॥
द्वितीयानपगमः हयग्रीवः नारायणोऽनिरुद्धः ॥

**दक्षिणे** -

यमश्शामला आभ्यामुपास्यमानः रामचन्द्रः । द्वितीयानपगमः हयग्रीवः नारायणोऽनिरुद्धः ।

प्रतिहारनामकोऽनिरुद्धः । पवमाननामा नारायणः प्रद्युम्नः । प्रकाशनामकः वासुदेवः सङ्कर्षणव्यूहः । प्राणनामकशेषः । अपाननाम्नी भारती । व्याननामकः वायुः । उदाननाम्नी रमा । समाननामकनारायणः ।

* दक्षिणाश्च

**निर्ऋतौ-**

निऋतिः कल्की। आभ्यामुपास्यमानो यमादवतीर्णः कृष्णः। द्वितीयानपगमः हयग्रीवः नारायणोऽनिरुद्धः।

**पश्चिमे-**

वरुणः भागीरथी च। आभ्यामुपास्यमानो नारायणः। द्वितीयानपगमः हयग्रीवः नारायणोऽनिरुद्धः। प्रतिहारनामकोऽनिरुद्धः पवमाननामकनारायणः। प्रद्युम्नः प्रकाशनामकवासुदेवः प्रद्युम्नव्यूहः। प्राणनामकशेषः। अपाननामकभारती व्याननामकवायुः। उदाननामकरमा। समाननामकनारायणः।

**वायव्ये-**

प्रवहः प्रावही। आभ्यामुपास्यमानो नृसिंहः। द्वितीयानपगमः। हयग्रीवः नारायणोऽनिरुद्धः। प्रतिहारनामकोऽनिरुद्धः। प्रतिहारनामकः नारायणः। प्रद्युम्नः प्रकाशनामकवासुदेवः अनिरुद्धव्यूहः। प्राणनामकः शेषः। अपाननाम्नी भारती। व्याननामको वायुः। उदाननाम्नी रमा। समाननामकः नारायणः।

**ईशान्ये** - रुद्रः पार्वती च। आभ्यामुपास्यमानः सङ्कर्षणः।

**ऊर्ध्वदिशि** - गरुडः सौपर्णी काम इति। एभिरुपास्यमानौ नारायणप्रद्युम्नौ।

**अधोदिशि** - शेषः वारुणी मित्रः मैत्री। एभिरुपास्यमानः शेषशायी नारायणः।

**अवान्तरदिशि** - गणेशः तदुपास्यसङ्कर्षणः।

अन्तरिक्षे एकोनपञ्चाशन्मरुतः तदुपास्योऽनिरुद्धः । स्वर्णनामकानिरुद्धः सङ्कर्षणः प्रतिहारनामकोऽनिरुद्धः निधननामकः सङ्कर्षणरामः । इति सन्ध्योपास्तिविधिः ।

जायानपि कनीयांसं सन्ध्याकालेऽभिवादयेत् ।
विना पुत्रं च शिष्यं च दौहित्रं दुहितुः पतिम् ॥ ७५५ ॥

सन्ध्यामुपास्य विधिवद्गायत्रीजपमाचरेत् ।
ततश्चाश्रममाक्रम्य हुत्वा चौपासनाहुती ।
ब्रह्मयज्ञं ततः कृत्वा देवपूजां समाचरेत् ॥'७५६ ॥ इति स्कान्दे ।

**(गायत्रीजपानन्तरं ब्रह्मयज्ञः)**

विष्णुधर्मोत्तरे-

ततः सन्ध्यामुपासीत गायत्रीं च जपेद् बुधः ।
तिष्ठन्नुदयपर्यन्तं गायत्र्यष्टशतं जपेत् ॥ ७५७ ॥

ततः प्राङ्मुखमासीन सायं प्रत्यङ्मुखो द्विजः ।
प्रातरौपासनं कृत्वा ब्रह्मयज्ञं समाचरेत् ।
धृत्वा द्वादशपुण्ड्राणि सन्ध्याकर्म समाचरेत् ॥ ७५८ ॥

वायुपुराणे -

प्रातर्होमं ततः कृत्वा देवर्षिपितृतर्पणम् ॥ इति ॥
अजपित्वा तु गायत्रीं ब्रह्मयज्ञं चरेद् द्विजः ।
ब्रह्मयज्ञं वृथा तस्य गायत्री बाधमाप्नुयात् ॥ ७५९ ॥

प्रातर्द्वादशनाड्यस्तु सायं तु नवनाडिकाः ।
होमकालः समुद्दिष्टो मुनिभिस्तत्वदर्शिभिः ॥ ७६० ॥

अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
अहोमी च क्रिमीन् भुङ्क्ते नार्चनी सर्वपातकम् ॥ ७६१ ॥

(औपासनहोमः नैव त्याज्यः)

औपासनार्थं यः कन्यामुद्वाह्य गृहमेध्यपि ।
तूष्णीं वर्तेत पापात्मा अष्टाविंशतिनारकी ॥ ७६२ ॥

ब्रह्मघ्ने च कृतघ्ने च गोघ्ने स्तेने च मद्यपे ।
[५५]पितृघ्ने निष्कृतिश्चास्ति निरग्नेर्नास्ति निष्कृतिः ॥ ७६३ ॥

यो भुङ्क्ते पञ्चयज्ञांश्च होमं त्यक्त्वा च मूढधीः ।
त्रैलोक्यपापं भुङ्क्तेऽसौ विष्टाशी स्यात् स सूकरः ॥ ७६४ ॥

ये न कुर्वन्ति होमं च अग्निहोत्रादिसत्क्रियाः ।
ते सर्वे क्रमशो भुक्त्वा नरकान्यखिलानि च ॥ ७६५ ॥

शुनीभूत्वा कोटिवारं सप्तवारं च सूकरः ।
श्वा भूत्वा सप्तजन्मानि म्लेञ्छस्यान्नात्र संशयः ॥ ७६६ ॥

तस्मात्कण्ठगते प्राणे पापभीतोऽग्निमान् भवेत् ।
औपासनमकुर्वाणः स्त्रियं वा योऽधिगच्छति ।
स्वमातृगमनं प्रोक्तं इति शातातपोऽब्रवीत् ॥ ७६७ ॥

द्वादशाहमनग्निस्तु सन्ध्याहीनो दिनत्रयम् ।
चतुर्वेदधरो विप्रो शूद्र एव न संशयः ॥ ७६८ ॥

---

५५. पितृघ्ने निष्करः शास्ति निरग्ने नास्ति निष्कृतिः ॥

कृतदारो न वै तिष्ठेत् क्षणमप्यग्निना विना ।
तिष्ठते चेत् द्विजो व्रात्यो त्यक्त्वाऽनुपतितो भवेत् ॥ ७६९ ॥

देशान्तरे परे ग्रामे नद्युत्तरण एव वा ।
व्याहृत्याज्याहुतीर्हुत्वा सम्यगौपासनं चरेत् ॥ ७७० ॥

अर्वाक् त्रिरात्राज्जुहुयाद् [५६]xxx सप्तरात्राच्च वनस्पतेश्च? ।
एकादशाहे भवतंतुमत्या आद्वादशाहे भवदग्निनाशः? ॥ ७७१ ॥

देशान्तरे गते विप्रे प्रमादाल्लुप्यतेऽनलः ।
असन्निहितभार्योऽपि सन्दधीतानलं पुनः ।
विवाहे प्रथमारम्भे सायमाहुत्युपक्रमः ॥ ७७२ ॥

अन्यत्र प्रातराहुत्येत्याश्वलायनसम्मतम् ।
यदा सन्धीयते वह्निः प्रायश्चित्तपुरःसरम् ॥ ७७३ ॥

तदा सायं विजानीयादाहुतीनां चतुष्टयम् ।
दशम्यामाहुतिर्द्वे च एकादश्यामनाहुतिः ॥ ७५४ ॥

द्वादश्यामाहुतेः षट्कमत ऊर्ध्वं यथाक्रमम् ।
नाग्निहोत्रं न च श्राद्धं न चौपासनमेव च ।
एकादश्यां तु कर्तव्यं द्वादश्यामेव कारयेत् ॥ ७७५ ॥

कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव कालहोमं समाचरेत् ॥ ७७६ ॥

---

५६. अयाश्च आ

अपसव्यं स्वधाकारं केशवासोदकं तथा ।
देवादितर्पणं चैव एकादश्यां विवर्जयेत् ॥ ७७७ ॥

समि(दा)रोऽपिते पक्षे आश्वलायनशाखिनः ।
आत्मन्यारोपिते पक्षे आपस्तम्भो विशिष्यते ॥ ७७८ ॥

औपासनाग्निद्वयसङ्गतिश्चेद्
अग्निं समारोपणतो विभज्य ।
पूर्वैव होता विविचेष्टि कुर्यात्
पश्चाच्च होता प्रतिकृच्च सोऽपि ? ॥ ७७९ ॥

अच्छागेति विभज्य
अग्निमलङ्कृत्य ॥

आज्येन महाव्याहृतिभिर्हुत्वा । विवचस्थालीपाकं कृत्वा । प्रतिकृतस्थालीपाकं कृत्वा । अग्नये विवचये स्वाहा । अग्नये स्विष्टकृते स्वाहेति । ततो यथाक्रमम् औपासनं कुर्यात् ।

**(औपासनपद्धतिः)**

औपासनाग्नौ च विवाहवह्नौ शावानले सूतकपावके च ।
शान्ते हते चोपहते च नष्टे शंन्नोदेवीत्यद्भिरवोक्ष्य भस्म ॥ ७८० ॥

भस्मात्समारोप्य समिध्ययन्तमजिह्व उद्बुध्य ऋचद्वयेन ।
लौक्यानले तां समिधं प्रहृत्य दद्याद्वरं काञ्चनमेव मौल्यम् ॥ ७८१ ॥

त्रिभिर्हते सुप्तिमुपैति वह्निः न तत्र वह्नौ जुहुयाच्चतुर्थः ।
बोधासुबोधेति समिद्द्वयेन तं बोधयित्वा जुहुयाच्चतुर्थः ॥ ७८२ ॥

षष्टिप्रस्तमिदं धान्यं त्रिप्रस्थघृतसंयुतम् ।
औपासनाग्निवित्तानि वत्सरस्य मनीषिभिः ॥ ७८३ ॥

मासे मासे च कृत्स्नं स्यात् षाण्मासाद् द्विगुणं भवेत् ।
त्रिगुणं नवमादूर्ध्वमेतदूर्ध्वं चतुर्गुणम् ॥ ७८४ ॥

*पाण्याहुतिर्द्वादशपर्वपूरितं
पक्वाहुतिर्बादरिकप्रमाणम् ।
आज्याहुतिर्माषनिमग्नधारा-
हुताशनस्योपरि षोडशाङ्गुलम् ॥ ७८५ ॥

चरूणां सूकरी मुद्रा समिद्धोमे मृगीं तथा ।
आज्यहोमे तथा कुर्यात् ह्येतद् होमस्य लक्षणम् ॥ ७८६ ॥

सधूमं कर्णमित्याहुस्सकृज्वालं तु नासिके ।
धूम्रज्वालं भवेन्नेत्रं प्रज्वालं तु मुखं तथा ॥ ७८७ ॥

कर्णाहुतिर्दरिद्रस्स्यात् महादुःखी च नासिके ।
नेत्रयोश्च स्वयं मृत्युर्मुखतो वर्धति प्रजाः ॥ ७८८ ॥

(अग्नेः सप्त जिह्वाः)

काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलीयमाना इति सप्तजिह्वाः ॥ ७८९ ॥

---

* पुण्या

हिरण्या कनका रक्तकृष्णा चैव च सुप्रभा ।
बहुरूपाऽतिरिक्ता च सप्तजिह्वाः प्रकीर्तिताः ॥ ७९० ॥

हिरण्या वारुणी जिह्वा कनका मध्यमा स्मृता ।
रक्ता चैवोत्तरी जिह्वा कृष्णा दक्षिणदिक्स्थिता ॥ ७९१ ॥

सुप्रभा पूर्वदिग्जिह्वा अतिरिक्ताऽग्निदिक्स्थिता ।
बहुरूपा च शार्वीया जिह्वास्थानान्यनुक्रमात् ॥ ७९२ ॥

इध्महोमं हिरण्यायां कनकायां हुनेच्चरुम् ।
रक्तायां जुहुयेदाज्यं कृष्णायां चैव लाजकाः ॥ ७९३ ॥

सुप्रभायां च सक्तुः स्यादाग्नेय्यां च [५७]तिलैः स्मृतम् ।
सिध्यर्थे बहुरूपा च होमस्थानान्यनुक्रमात् ॥ ७९४ ॥

विवाहे वारुणी जिह्वा मध्यमा जातकर्मणि ।
औत्तरी चोपनयने दक्षिणा पितृकर्मणि ॥ ७९५ ॥

पूर्वदिक् सर्वकामार्थे ईशान्ये चोग्रकर्मणि ।
आग्नेय्यां शान्तिहोमे तु कर्मस्थानान्यनुक्रमात् ॥ ७९६ ॥

अग्नौ जिह्वासु होतव्यं जिह्वां ज्ञात्वा यथाविधि ।
अग्नितुन्दे हुते रोगः नासिकायां धनक्षयः ॥ ७९७ ॥

चक्षुषो निधनप्राप्तिः कर्णे दारिद्र्यकृद्भवेत् ।
हुतं शिरसि पापं स्यात्तस्माज्जिह्वासु हूयते ॥ ७९८ ॥

५७. तिलैर्हुने

यावत्काष्टं तु तच्छ्रोत्रं यत्र धूमस्तु नासिका।
यत्राल्पज्वलनं नेत्रं यत्र भस्मानि तच्छिरः ॥ ७९९ ॥

यत्रैव ज्वलितो वह्निः जिह्वास्तत्रैव कीर्तिताः।
सप्तजिह्वास्त्वविज्ञाय यः कुर्यादग्निसन्निधौ ॥ ८०० ॥

होमो निष्फलतां याति होता च नरकं व्रजेत्।
अप्रवृद्धे सधूमे वा जुहुयाच्चेत् हुताशने।
यजमानो भवेदन्धः ५८स मूको वा विनिश्चयः ॥ ८०१ ॥

'एष हि देवे'ति मन्त्रेण अक्षतोदकपाणिना।
हव्यवाट् सलिलं दृष्ट्वा भीतः प्रत्यङ्मुखो भवेत् ॥ ८०२ ॥

पूर्वभागे तु मेधावी दक्षिणे आयुःक्षयं भवेत्।
पश्चिमे बुद्धिसन्ताप उत्तरे मरणं ध्रुवम् ॥ ८०३ ॥

गृहीत्वा मध्यभागे तु आयुर्वृद्धिः दिने दिने।
जलयुक्तस्तु मेधावी तद्धोमं निष्फलं भवेत् ? ॥ ८०४ ॥

**(विधुराग्निसन्धानक्रमः)**

श्रीशौनकः -

विधुरस्याग्निसन्धानं वक्ष्येऽहं विधिना ततः।
स स्नात्वा सुदिने कृत्वा पुण्याहस्य तु वाचनम् ॥ ८०५ ॥

प्राणानायम्य सङ्कल्प्य परितः स्थण्डिलं शुचिः।
कृत्वाऽग्निस्थापनं तत्र कुर्यात् धान्यादिकं च हि ॥ ८०६ ॥

---

५८. स मूर्खेति

पुनः सन्धानवत्कुर्यात् लाजाहोमान्त एव च ।
ततश्चाज्याहुतीर्हुत्वा चतस्रो जुहुयादिमाः ॥ ८०७ ॥

'अयाश्चाग्ने' 'अतो देवा' ''इदं विष्णुश्च' 'सप्त ते' ।
तत्रैवं जुहुयादाज्यं मन्त्रैश्चैव तु पञ्चभिः ॥ ८०८ ॥

'शुची वो' 'पावमानीयं' 'तन्तुं तन्वन्' इति क्रमात् ।
'वेत्थ वेदोऽध्वन' 'आदेवाना'मपीत्यथ ॥ ८०९ ॥

गृहप्रवेशेनीयार्थं चतस्रस्तु घृताहुतीः ।
'वैश्वानरस्य सुमतौ' 'पृष्टोदिव' ततः परम् ॥ ८१० ॥

'त्वमग्ने व्रतपा'सीति 'यद्वो वयम्' इति क्रमात् ।
व्याहृतीश्च चतस्रस्तु समिधो जुहुयादथ ॥ ८११ ॥

**(विधुरौपासनपुनः सन्धानमन्त्राः)**

'अग्ने पवस्व' 'उपास्म' इति पावमानीयम् ।

तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतःपथो रक्ष धियाकृतान् ।

अनुल्बणं वयतजोगूवामपोमनुर्भवजनयोदेव्यं जनं स्वाहा ।।?

तन्तुमते ज्योतिष्मत इदं न मम ।

वेत्थ हि वेधो अध्वनः पथश्च देवाञ्जसा ।

अग्ने यज्ञेषु सुक्रतो स्वाहा । अग्नये पथिकृत इदं न मम ।

आ देवानामपि पन्थामगन्म यच्छक्नवोम तदनु प्रवोळ्हुम् ।

अग्निर्विद्वान् स यजात्सेदु होता सोऽध्वरान् त्स ऋतून् कल्पयति ।

स्वाहा । अग्नय इदम् न मम ।

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनं नामाभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ।
स्वाहा । अग्नये वैश्वानरायेदं न मम ।
पृष्टो विदि पृष्टोऽग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरस्सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तुम् ।
स्वाहा । अग्नये वैश्वानरायेदम् न मम ।
त्वमग्ने व्रतपा असि देव आमर्त्येष्वा । त्वं यज्ञेष्वीड्यः ।
स्वाहा । अग्नये व्रतपतय इदम् ।
यद्वो वयं प्रमिनामेम वृतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वम, पृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयति ।
स्वाहा । अग्निमरुद्भ्यो देवेभ्य इदम् ।
सप्त ते अग्ने समिधः सप्तजिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ।
अग्नये सप्तपतय इदं न मम ।

ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
ततो गां ब्रह्मणे दद्यात् होमसम्पूर्तिहितवे ॥ ८१२ ॥

तदभावे तु सौवर्णं स्वशक्त्यैव च दक्षिणाम् ।
सन्धानं विधुरः कुर्यादेवमग्नेर्विधानतः ॥ ८१३ ॥

**(यावज्जीवमग्निहोत्रं कुर्यात्)**

औपासनं ततः कुर्यात् सायं प्रातस्तथैव च ।
गृहस्थसदृशः सोऽपि जायते नात्र संशयः ॥ ८१४ ॥

स्थालीपाकादिकं चैव तथैव ग्रहणादिकम् ।
कुर्यादित्याहुराचार्याः स्वस्मिन्नेव हुताशने ।
नारोपणं नास्यावरोपणं वा उत्पत्तिरेवं विधुरानलस्य ॥'८१५॥
इति शौनकीये ॥

वैधुर्यं नसमाप्नोति विधुरो यदि पुत्रवान् ।
तथा वेदविदश्चैव सर्वकर्मसु च निश्चयः ॥ ८१६ ॥

विद्यापत्नी तपो *ह्यग्निः वैधुर्यं तद्वतो कुतः ।
पत्नी प्रमितदेहार्धास्ते योग्याः सर्वकर्मसु ॥ ८१७ ॥

अनाश्रमोऽप्याश्रमी स्यादपत्नीकोऽपि पुत्रवान् ।
स्नुषादुहितृपक्वान्नमद्याद्द्याज्जुहोति च ॥ ८१८ ॥

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनापि तत्कार्यं यावज्जीवं समाचरेत् ॥ ८१९ ॥

अन्यां कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासीत यावज्जीवमतन्द्रितः ॥ ८२० ॥

पुत्रहीनस्त्वग्निहीनः पुत्रवानग्निमान् भवेत् ।
पुत्रिणः सर्वतो ग्राह्या इति वेदविदो विदुः ॥ ८२१ ॥ इति च ।

अवैष्णवस्य शैवस्य पतितस्यान्त्यजस्य च ।
शूद्रस्य वृषलस्यापि गृहेष्वाग्निं परित्यजेत् ॥ ८२२ ॥

त्रिभिरन्तरितः सोऽपि ग्राह्यः श्रोत्रियसद्मगः ।
वह्निः प्रशस्तोऽरणिजः सर्वकर्मसु पूजितः ॥ ८२३ ॥

---

* ह्यः

आयसे भिन्नपात्रे च विधवाऽनीत एव वा।
गृहपाके कृतं कुर्यात् पुनः सन्धानमाचरेत् ॥ ८२४ ॥
शरावे भिन्नपात्रे च कपाले वोल्मुकेऽपि वा।
अग्निप्रणयनं कुर्यात् व्याधिर्हानिर्भयानि च ॥ ८२५ ॥
पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे।
अग्निप्रणयनं कार्यं शरावे तादृशेऽपि वा ॥ ८२६ ॥
वस्त्रेणाच्छाद्य पर्णेन पाणिशूर्पेण दारुभिः।
न कुर्यादग्निमथनं न कुर्याद् व्यजनादिना ॥ ८२७ ॥
पर्णेनैव भवेद् व्याधिः शूर्पेण धननाशनम्।
पाणिना मृत्युमाप्नोति *आयुः क्षीणं मुखेन्धनम् ॥ ८२८ ॥
धवनीमन्तरं कृत्वा तृणं वा काष्ठमेव च।
मुखेनाग्नीन्धनं कृत्वा मुखमग्निः प्रजायते ॥ ८२९ ॥
वेणुरग्निप्रसूतित्वाद्वेणुरग्निं च पावनात्।
तस्माद्वेणुधमन्येव धमेदग्निं विचक्षणः ॥ ८३० ॥
प्रादेशमात्रं कुर्वीत स्थण्डिलं चतुरस्रकम्।
गोमयेनाथवा रक्तमृदा वा शुभलक्षणम् ॥ ८३१ ॥
कुण्डं वा कारयेद् भूमौ चतुरस्रं मनोरमम्।
स्थण्डिलस्य प्रमाणेनान्यद्वायसवर्जितम् ॥ ८३२ ॥
तत्रैव होमं कुर्वीत मनसा चिन्तयन् हरिम्।
अन्यथा निष्फलो होमः होमी च नरकं व्रजेत् ॥ ८३३ ॥

---

* आयुक्ष

सर्वरत्नमयी भूमिः सर्वतीर्थसमाश्रिता ।
सर्वौषधिगुणोपेता किमर्थमुपलेपनम् ॥ ८३४ ॥

इन्द्रस्य वज्रेण हतो वृत्रासुरमहायशाः ।
तस्य मेदो वधाच्छिन्नं तदर्थमुपलेपनम् ॥ ८३५ ॥

यत्पूर्वस्यामाहुत्यां हुतायाम् उत्तराहुतिः स्कन्देत् द्विपाद्भिः पशुभिर्यजमानो वर्धेत । यदुत्तराभिर्जुहुयात् । चतुष्पाद्भिः पशुभिः यजमानो वर्धेत । यत्र वेत्थ वनस्पते देवानां गुह्यनामानि । तत्र हव्यानि कामयेति वनस्पत्यर्चा समिधमाधाय तूष्णीमेव पुनर्जुहुयात् । इति वनस्पतिहोमविधिः ।

समित्प्रादेशमात्रा स्यादव्रणा पिप्पलोद्भवा ।
पालशका वा न स्थूला नातिह्रस्वा प्रशस्यते ॥ ८३६ ॥

गृहिणां वनिनां चैव समिधावीरिते इमे ॥
अपामार्गसमिद्भिश्च वर्णिनां होमकर्मणि ॥ ८३७ ॥ इति च ।

**(ब्रह्मयज्ञफलम्)**

शेषधर्मे-

ब्रह्मयज्ञफलं वक्ष्ये श्रुणु सोमकुलोद्भव ॥
ब्रह्मयज्ञं तु यः कुर्यात् ब्रह्मणो रूपमव्ययम् ॥ ८३८ ॥

मम सालोक्यमाप्नोति सत्यं सत्यं मयोदितम् ।
प्रणवं व्याहृतिं चोक्तगायत्रीं वेदमातरम् ॥ ८३९ ॥

पादं पादं जपं कुर्यात् ततो वेदं यथाक्रमम् ।
इदं तु मन्मतं राजन् मत्प्रियं कुरु पाण्डव ॥ ८४० ॥

यज्ञस्त्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।
ब्रह्मयज्ञमिदं श्रौतं यः करोति स मुक्तिभाक् ॥ ८४१ ॥

ब्रह्मयज्ञात्तपोवृद्धिः ब्रह्मतेजः प्रवर्धते ।
यशो बलं च कौन्तेय धर्मवृद्धिः प्रजायते ।
कुरुते यदि पापानि व्यवधूय दिवं व्रजेत् ॥ ८४२ ॥ इति ।

(सदाचारस्मृतिः)

**स्नात्वा सम्पूजयेद् विष्णुं वेदतन्त्रोक्तमार्गतः ।**
**वैश्वदेवं बलिं चैव कुर्यान्नित्यं तदर्पणम् ॥ १२ ॥**

(देवपूजार्थं स्वीकार्यतुलसीमाहात्म्यकथनम्)

वायुपुराणे-

या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुःपावनी
रोगाणामभिवन्दिता निरसनी सिक्तान्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता ।
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ ८४३ ॥

यन्मूले सर्वतीर्थानि यन्मध्ये सर्वदेवताः ।
यदग्रे सर्ववेदाश्च तुलसि त्वां नमाम्यहम् ॥ ८४४ ॥

तुलसीकाननं यत्र यत्र पद्मवनानि च ।
वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः ॥ ८४५ ॥

पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
वासुदेवादयो देवाः वसन्ति तुलसीवने ॥ ८४६ ॥

दृष्ट्वा स्पृष्ट्वाऽथवा ध्यात्वा नमिता कीर्तिता श्रुता ।
रोपिता सञ्चिता नित्यं तुलसी पूजिता शुभा ॥ ८४७ ॥

[५९]नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने ।
युगकोटिसहस्राणि ते वसन्ति हरेर्गृहे ॥ ८४८ ॥

[६०]श्रियाश्रये श्रियावासे नित्यं सत्कृतशोभिते ।
भक्त्या दत्तं मया देवि ग्रहाणार्घ्यं नमोऽस्तुते ॥ ८४९ ॥

श्रियं देहि यशो देहि कीर्तिमायुः सुतां सुतम् ।
बलं पुष्टिं तथा धर्मं तुलसि त्वां नमाम्यहम् ॥ ८५० ॥

पापानि यानि रविसूनुपटस्थितानि
ब्रह्मघ्नबालपितृमातृवधादिकानि ।
नश्यन्ति तानि तुलसीवनदर्शनेन
गोकोटिदानसदृशं फलमाप्नुवन्ति ॥ ८५१ ॥

तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये ।
केशवार्थे विचिन्वामि वरदा भव शोभने ॥ ८५२ ॥

तुलसीमञ्जरी ग्राह्या तदभावे तु पल्लवम् ।
तदभावे तु पत्रं स्यात् पत्राभावे तु काष्ठकम् ॥ ८५३ ॥

तदभावे तु मूलं स्यात् मूलाभावे तु मृत्तिका ।
मृत्तिकाया अभावे तु तुलसीशब्द उच्यते ॥ ८५४ ॥

---

५९. न वृथा
६०. श्रियाश्र ये

सङ्क्रान्तौ पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः ।
तुलसीं ये विचिन्वन्ति निकृन्तन्ति हरेः शिरः ॥ ८५५ ॥

भानुभार्गवभौमे च व्यतीपाते च वैधृतौ ।
तुलसीं यो विचिन्वानो ब्रह्महा स निगद्यते ॥ ८५६ ॥

रोपणात्पालनात्सेवास्पर्शनाद्दर्शनात्तथा ।
तुलसी हरते पापं जन्मकोटिशतोद्भवम् ॥ ८५७ ॥

तुलसीनिषेधे हरिपूजनार्थे
सञ्छिद्यते माधवपुण्यवासरे ।
धिग्जीवितं यौवनमर्थसन्ततिं
तेषां सुखं नेह च दृश्यते परम् ॥ ८५८ ॥

ये हि भागवता भूत्वा तुलसीचन्दनं कलौ ।
नार्पयन्ति सदा विष्णोः न च भागवता हि ते ॥ ८५९ ॥

श्रीमत्तुलस्यार्चयते सकृच्च पत्रैः
सुगन्धैर्विमलैश्च खण्डितैः ।
यस्तस्य पापं पटसंस्थितं तदा
निरीक्षयित्वा परिमार्जयेद् यमः ॥ ८६० ॥

मोक्षैकहेतूद्धरणेऽखिलस्य
विष्णोर्मुकुन्दस्य हरिप्रिये ते ।
आराधनार्थं पुरुषोत्तमस्य
चिनोमि पत्रं तुलसि क्षमस्व ॥ ८६१ ॥

त्वदङ्गसम्भवैः पत्रैः पूजयामो सदा हरिम् ।
तदा कुरु पवित्राङ्गी कलौ मलविनाशनी ॥ ८६२ ॥

हरेर्मूर्ध्नि वसेद् यस्तु तुलसीकाष्ठचन्दनम् ।
स्वदेहे धारयेद् यस्तु तीर्थकोटिफलं भवेत् ॥ ८६३ ॥

युक्तो यदि महापापैः सुकृतं नार्जितं क्वचित् ।
तथापि गीयते मोक्षो तुलसी भक्षिता यदि ॥ ८६४ ॥

विष्णुपादाब्जसंलग्नामहोरात्रार्पितां शुभाम् ।
तुलसीं धारयेद् यस्तु तस्य पुण्यमनन्तकम् ॥ ८६५ ॥

किं करिष्यति सुस्नातो गङ्गायां भूसुरोत्तमः ।
यो वहेच्छिरसा नित्यं तुलसीं विष्णुसेविताम् ॥ ८६६ ॥

शत्रुघ्नं च सुपुण्यं च श्रीकरं चाघनाशनम् ।
कृत्वा धर्ममवाप्नोति शिरसा तुलसीदलम् ॥ ८६७ ॥

यः कश्चिद्वैष्णवो लोके मिथ्याचाराघनाशनम् ।
पुनाति सकलान् लोकान् तुलसीं शिरसा वहन् ॥ ८६८ ॥

तुलसीकाननं दृष्ट्वा विमुखो याति पातकी ।
निश्चयान्मुनिशार्दूल ब्रह्महा स निगद्यते ॥ ८६९ ॥

मध्याह्नादुत्तरं यस्तु हरिपूजापरः स्थितः ।
तुलसीच्छेदनान्मूर्खो अधोगतिमवाप्नुयात् ॥ ८७० ॥

बिल्वपत्रं शमीपत्रं जाजीपुष्पं सरोरुहम् ।
वनजं तुलसीपत्रं कौस्तुभादधिकं हरेः ॥ ८७१ ॥

नारदः -

वन्दे मुकुन्दमरविन्ददलायताक्षं
कुन्देन्दुशङ्खविशदं शशिगोपवेषम् ।
इन्द्रादिदेववरवन्दितपादपद्मं
वृन्दावनालयहरिं वसुदेवसूनुम् ॥ ८७२ ॥

नामोच्चारयते यस्याः प्रणम्यासुरदर्पहम् ।
पापानि विलयं यान्ति पुण्यं भवति चाक्षयम् ॥ ८७३ ॥

सा कथं तुलसी लोके पूज्यते वन्द्यते नरैः ।
धन्योऽस्मिन् मानवो लोके येषां सम्पद्यते कलौ ॥ ८७४ ॥

केशवार्थे कलौ ये च रोपयन्ति हि भूतले ।
किं करिष्यति तान् दृष्ट्वा यमोऽपि सह किङ्करैः ॥ ८७५ ॥

तुलसीदले च देवेशो पूजितो येन दैत्यहा ।
तीर्थयात्रादिगमनैः किं फलं शतधा जपैः ॥ ८७६ ॥

नार्चयन्ति हरेर्बिम्बं तुलस्या कोमलैर्दलैः ।
सुमञ्जरीदलैयुक्ततुलसीसम्भवैस्तथा ॥ ८७७ ॥

तुलसीपक्वपत्राणि प्रभाते भूतले शुभे ।
विष्णोराराधनार्थाय नियते मोक्षकारिणी ॥ ८७८ ॥

तुलसीपक्वपत्रैश्च श्रीहरेः पादपङ्कजे ।
पूजनं ये च कुर्वन्ति ते कृतार्थाः कलौ नराः ॥ ८७९ ॥

स्नाने दाने तथा ध्याने प्राशने केशवार्चने ।
तुलसी हरते पापं कीर्तने रोपणे तथा ॥ ८८० ॥

रोपिता गोमतीतीरे स्वयं कृष्णेन पालिता ।
जगद्धिताय तुलसी गोपीनां रतिहेतवे ॥ ८८१ ॥

वृन्दावने रता नित्यं सेविता विष्णुना स्वयम् ।
गोकुलस्य च वृद्ध्यर्थं कंसस्य निधनाय च ॥ ८८२ ॥

वशिष्ठवचनाच्चैव रामेण सरयूतटे ।
राक्षसानां वधार्थाय रोपिता त्वं जगत्प्रिये ॥ ८८३ ॥

वियोगाद् रामदेवस्य ध्यात्वा त्वां जनकात्मजा ।
अशोकवनमध्ये तु [६१]प्रियेण सह सागमत् ॥ ८८४ ॥

शङ्करार्थं पुरा देव्या उमया च हिमालये ।
रोपिता भववृद्ध्यर्थं तुलसि त्वां नमाम्यहम् ॥ ८८५ ॥

सर्वाभिर्दैवपत्नीभी रोपिते नन्दने वने ।
स्वर्गे तु मङ्गलार्थं हि सेविता त्वं नमोऽस्तु ते ॥ ८८६ ॥

धर्मारण्ये गयायां च सेवितां पितृभिः स्वयम् ।
सेविता तुलसी पुण्या आत्मनो हितकाम्यया ॥ ८८७ ॥

सीतया सेविता भक्त्या तुलसी दण्डकानने ।
त्रैलोक्यपावनी गङ्गा यथा शास्त्रेषु गीयते ॥ ८८८ ॥

तथैव तुलसीदेवी दृश्यते सचराचरम् ।
ऋष्यमूके तु वसता कपिराजेन सेविता ॥ ८८९ ॥ इति ।

---

६१. प्रीणयं

विष्णुधर्मोत्तरे -

न च्छिन्द्यात्तुलसीं विप्रो द्वादश्यां वैष्णवः क्वचित् ।
देवार्थे तुलसीच्छेदो होमार्थे समिधस्तथा ।
[६२]'इन्दुक्षये न दुष्येत गवार्थे वै तृणस्य च' ॥ ८९० ॥ इति ।

गारुडे -

सङ्क्रान्त्यादिनिषेधस्तु परेषां परिकीर्तितः ।
कश्चिन्न तुलसीं च्छिन्द्याद् द्वादश्यामेव वैष्णवः ॥ ८९१ ॥

भानुवारे विना दूर्वां तुलसीं द्वादशीं विना ॥
इन्दुक्षयेऽप्यदूष्येत देवार्थे तुलसीं यथा ॥ ८९२ ॥ इति

अर्के पर्वणि सङ्क्रान्तौ व्यतीपाते च वैधृतौ ।
विशेषेणैव द्वादश्यां मध्याह्ने निशि सन्ध्ययोः ।
तुलसीं ये नु चिन्वन्ति ते च्छिदन्ति हरेः शिरः ॥ ८९३ ॥

भौमार्कशुक्रवारेषु पातसङ्क्रमणे तथा ।
तुलसीं यो विचिन्वानो ब्रह्महा स निगद्यते ॥ ८९४ ॥

शुष्कं पर्युषितं वापि निर्माल्यं च त्रिवासरे ।
प्रक्षालयित्वा तुलसीं पूजार्हां सततं हरेः ॥ ८९५ ॥

तुलसीरहितां पूजां न गृह्णाति हरिः सदा ।
काष्ठं वा स्पर्शयेत्तत्र नो चेत्तन्नाम वा भवेत् ॥ ८९६ ॥

इति सङ्ग्रहे ।

---

६२. इदं क्षये

वायुपुराणे माघमाहात्म्ये -

माधवे तुलसीहीनां पूजां यः कर्तुमीहते ।
कुलान्निपातयेत् सप्त नरके रुधिरोदये ॥ ८९७ ॥

यो दद्यात्तुलसीपत्रं पादयोश्चक्रपाणिनः ।
कुलकोटिसमायुक्तः विष्णुलोके महीयते ॥ ८९८ ॥

यस्तुलस्याः पत्रशतं विष्णवे परमात्मने ।
समर्पयति तत्पुण्यं वक्तुं शक्तो न विद्यते ॥ ८९९ ॥

पितॄन् गुरून् समुद्दिश्य तुलसी विष्णवेऽर्पिता ।
ब्रह्महत्याकोटिशतम् अगम्यानां सहस्रकम् ।
अभितः कोटिपापानि दहत्यग्निरिवेन्धनम् ॥ ९०० ॥

अर्पिते तुलसीपत्रे माधवो भक्तवत्सलः ।
अपराधसहस्रं वा सहते नात्र सशयः ॥ ९०१ ॥

यः कुर्यात्तुलसीपत्रैः पूजां विष्णोर्महात्मनः ।
जन्मकोटिसहस्रेषु न दरिद्रो भवेन्नरः ॥ ९०२ ॥

विधवात्वं न चाप्नोति नारी जन्मनि जन्मनि ।
[६३]मौल्यादानीय पुष्पाद्यं स्त्रीशूद्राद्यैर्द्विजोत्तम ।
ब्राह्मणैः कारयेत्पूजां यस्मात्पुष्पं हरेः प्रियम् ॥ ९०३ ॥

यः पूजयति देवेशं कमलैः कमलेक्षणम् ।
तस्य पुण्यफलं वक्तुं कः शक्तो दिवि वा भुवि ॥ ९०४ ॥

---

६३. माल्यादीनि

कमलैः पूजिते विष्णौ कमला वसते गृहे ।
फलन्ति कामाः सर्वेऽपि नैव दुःखं प्रजायते ।
द्वात्रिंशदपराधानि क्षमते पुरुषोत्तमः ॥ १०५ ॥

स्कान्दे मार्गशीर्षमाहात्म्ये -

**(पुष्पविशेषसमर्पणेन फलविशेषकथनम्)**

एवं पुष्पविशेषेण फलं तदधिकं सुत ।
पुष्पात्पुष्पान्तरे भेदो यथा [६४]स्यात्तन्निबोध मे ॥ १०६ ॥

द्रोणपत्रसहस्रेभ्यः खदिरं तद्विशिष्यते ।
खदिरस्य सहस्रेभ्यः शमीपत्रं विशिष्यते ॥ १०७ ॥

शमीपत्रसहस्रेभ्यो बिल्वपत्रं विशिष्यते ।
बिल्वपत्रसहस्रेभ्यो बकुलपुष्पं विशिष्यते ॥ १०८ ॥

बकुलपुष्पसहस्राच्च नन्द्यावर्तं विशिष्यते ।
नन्द्यावर्तसहस्राद्धि करवीरं विशिष्यते ॥ १०९ ॥

करवीरसहस्रस्य कुसुमाश्वेतमुत्तमम् ।
कुसुमाश्वेतपुष्पात् पालाशं पुष्पमुत्तमम् ॥ ११० ॥

पालाशस्य सहस्राद्धि कुशपुष्पं विशिष्यते ।
कुशपुष्पसहस्राद्धि वनमाला विशिष्यते ॥ १११ ॥

वनमालासहस्राद्धि चम्पकं तु विशिष्यते ।
[६५]चम्पकानां पुष्पशतादशोकं पुष्पमुत्तमम् ॥ ११२ ॥

---

६४. स्यातं न्निबोधमा    ६५. पञ्चकस्य

अशोकस्य च साहस्राच्छावन्तीपुष्पमुत्तमम् ।
शावन्त्यास्तु सहस्रात्तु कुब्जकं पुष्पमुत्तमम् ॥ ९१३ ॥

कुब्जपुष्पसहस्राद्धि मालतीपुष्पमुत्तमम् ।
मालतीपुष्पसाहस्रात् त्रिसन्ध्यारक्तमुत्तमम् ॥ ९१४ ॥

त्रिसन्ध्यारक्तसाहस्रात् त्रिसन्ध्याश्वेतमुत्तमम् ।
त्रिसन्ध्याश्वेतसाहस्रात्कुन्दपुष्पं विशिष्यते ॥ ९१५ ॥

सर्वासां पुष्पजातीनां जाजीपुष्पं महोत्तमम् ।
जाजीपुष्पसहस्रेण कृतमालां सुशोभनाम् ॥ ९१६ ॥

मह्यं यो विधिवद् दद्यात्तस्य पुण्यफलं श्रुणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
[६६]मत्पुरे वसते श्रीमान् मम तुल्यपराक्रमः ॥ ९१७ ॥

येषां सन्ति न पुष्पाणि प्रशस्तानि ममार्चने ।
तेषां पत्राणि शस्तानि तदलाभे फलानि च ॥ ९१८ ॥

ये तैः पत्रैश्च पुष्पैश्च फलैश्चापि तथा हि माम् ।
अर्चनं दशसुवर्णस्य प्रत्येकं फलमाप्नुयात् ॥ ९१९ ॥

ताभिः सुपुष्पजातीभिः सह मामर्चयन्ति ये ।
भक्तिं ददामि तेषां वै तुष्टः सन् नात्र संशयः ॥ ९२० ॥

धनं पुत्रान् तथा दारान् यत्किञ्चिद् वाञ्छतीह सः ।
तत्तद्ददामि देवेश पुष्पैरेभिः प्रतोषितः ॥ ९२१ ॥

---

६६. मत्पुरो

तत्रैव श्रीभगवानुवाच -

श्रुणु पुत्र प्रवक्ष्यामि माहात्म्यं पुष्पसम्भवम् ।
येन पत्रेण मे प्रीतिः भवेत्सम्यङ् न संशयः ॥ ९२२ ॥

मल्लिका मालती चैव यूथिकाजातिमुक्तकाः ।
पाटलीकरवीरश्च जयन्ती विजया तथा ॥ ९२३ ॥

कुङ्कुमः अगरश्चैव कर्णिकारः करण्डकः ।
चम्पकश्चातकः कुन्दो बाणो बर्बरमाणिकः ॥ ९२४ ॥

अशोकश्चम्पकश्चैव तथैवाक्षकरूपकः ।
अमी पुष्पप्रजातास्तु शस्ता मे पूजने सुत ॥ ९२५ ॥

केतकीपत्रपुष्पं च तथा भृङ्गारकस्य च ।
तुलसीपत्रपुष्पं च सद्यः प्रीतिकरं मम ॥ ९२६ ॥

पद्मान्यम्बुसमुत्थानि [६७]रक्तं नीलं तथोत्पलम् ।
सितोत्पलं सहो मासे ममात्यन्तं हि वल्लभम् ॥ ९२७ ॥

तान्येव च प्रशस्तानि कुसुमानि च मे सुत ।
यानि सुवर्णयुक्तानि रसगन्धयुतानि च ॥ ९२८ ॥

निर्गन्धान्यपि शस्तानि कुशादीनि मतानि मे ।
सुरभीणि तथान्यानि वर्जयित्वा तु केतकीम् ॥ ९२९ ॥

बाणं च चम्पकाशोकं करवीरं च यूथिका ।
पारिभद्रं पाटला च बकुलं गिरिशालिनी ॥ ९३० ॥

---

६७. रक्तनीलां तथोत्तराम्

बिल्वपत्रं शमीपत्रं भृङ्गराजस्य वै तथा ।
तमालामलकीपत्रं शस्तं मे पूजने सुत ॥ ९३१ ॥

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिच्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥ ९३२ ॥

[६८]आत्मारामोद्भवैर्वापि पुष्पैः संपूज्ययेच्च माम् ।
पुष्पजातिविशेषेण भवेत्पुण्यं विशेषतः ॥ ९३३ ॥

तपःशीलगुणोपेते पात्रे प्रादाच्च पारणे ।
दश दत्वा सुवर्णानि यत्फलं लभते नरः ।
तत्फलं लभते मर्त्यो सहे कुसुमदानतः ॥ ९३४ ॥

द्रोणपुष्पैस्तथैकस्मिन् मह्यं च विनिवेदिते ।
दश दत्वा सुवर्णानि फलं तदधिकं सुत ।
एवं पुष्पविशेषेण फलं तदधिकं सुत ॥ ९३५ ॥ इति ।

त्वं दूर्वे अमृतजन्मासि वन्दिता ससुरासुरैः ।
सौभाग्यं सन्ततं दत्वा सर्वकार्यकरी भव ॥ ९३६ ॥

तुलसी श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनःप्रिये ॥ ९३७ ॥

श्रियं देहि यशो देहि कीर्तिमायुस्तथा सुखम् ।
प्रजां पशूंस्तथा पुष्टिं तुलसि त्वं प्रयच्छ मे ॥ ९३८ ॥

मणिकाञ्चनपुष्पाणि तथा मुक्तामयानि च ।
तुलसीपत्रजातस्य कलां नार्हन्ति षोडशीम् ॥ ९३९ ॥

६८. आत्मरामोद्भवामपि

तुलसीमञ्जरीभिर्यः कुर्याद् वै मम पूजनम् ।
[६९]न स गर्भगृहं यायात् मुक्तिभागी भवेन्नरः ॥ ९४० ॥

आरोप्य तुलसीं वत्स सम्पूज्य च दलैश्च माम् ।
वसन्ति मोदमानास्ते श्वेतद्वीपे च मे गृहे ॥ ९४१ ॥

तुलसी न येषां मम पूजनार्थं
संपाद्यतैकादशपुण्यवासरे ।
धिक् जीवनं जीवितमर्थसन्ततिं
तेषां सुखं नेह च नाप्यतः परम् ॥ ९४२ ॥

बिम्बमप्यर्चितं दृष्ट्वा सहोमासे च मामकम् ।
तुलसीपत्रनिचयैः मुच्यते ब्रह्महत्यया ॥ ९४३ ॥

नित्यमभ्यर्चयेद् यो वै तुलस्या मां रमेश्वरम् ।
महापापानि नश्यन्ति किं पुनश्चोपपातकम् ॥ ९४४ ॥

वर्जयेत्पर्युषितं पुष्पं वर्जयेत्पर्युषितं जलम् ।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥ ९४५ ॥

न वर्जयति च पुष्पाणि मालत्यादीनि भो सुत ।
यावन्न प्राप्यते पुण्या तुलसी मम वल्लभा ॥ ९४६ ॥

सकृदभ्यर्चयेद् यो मां बिल्वपत्रेण मानवः ।
मुक्तिभागी निरातङ्की मम पारिषदो भवेत् ॥ ९४७ ॥

---

६९. न स गर्भगृहन्यायन्मुक्तिभाक्भवेन्नरः ।

बिल्वपत्रात् शमीपत्रात् जाजीपुष्पात्सरोरुहात् ।
वल्लभं तुलसीपत्रं कौस्तुभादधिकं मम ॥ ९४८ ॥

अभिन्नपत्राद्रचिता हृद्या मञ्जरिसंयुता ।
क्षीरोदार्णवसम्भूता दापनीया सदा मम ॥ ९४९ ॥

अकृष्णा अथवा कृष्णा तुलसी मम वल्लभा ।
सिता वाऽप्यसिता वाऽपि द्वादशी वल्लभा यथा ॥ ९५० ॥

गृहीत्वा तुलसीपत्रं भक्त्या मां यः समर्चयेत् ।
अर्चितं तेन सकलं सदेवासुरमानुषम् ॥ ९५१ ॥

तावद्गर्जन्ति रत्नानि कौस्तुभादीन्यसंशयः ।
यावन्न प्राप्यते कृष्णतुलसी कृष्णमञ्जरी ॥ ९५२ ॥

कृष्णं कृष्णतुलस्या च यो भक्त्या पूजयेन्नरः ।
स याति भवनं शुद्धं यत्र विष्णुः श्रिया सह ॥ ९५३ ॥

**ममार्चनार्थं लक्षाणां यच्छन्ति तुलसीदलम् ।**
**अन्येषामपि भक्तानां यान्ति ते पदमव्ययम्** ॥ ९५४ ॥

तुलसी कृष्णगौरा या तया यो मां समर्चयेत् ॥
नरो याति तनुं त्यक्त्वा वैष्णवीं शाश्वतीं गतिम् ॥९५५॥ इति च ।

तुलसीमञ्जरी पुष्पाण्याहृतान्यत्र तानि च ।
यथाकालोपपन्नानि स्वारामवनजानि च ॥ ९५६ ॥

आहृत्यान्यत्र चोप्तानि चौर्याल्लब्धानि नार्पयेत् ।
शूद्राहृतानि भूमौ च गलितानि तथैव च ॥ ९५७ ॥

एरण्डार्कजपत्रे तु आहृतानि करेण च ।
पटाहृतानि यानि स्युः वर्जयेत्तानि यत्नतः ॥ ९५८ ॥

'शूद्राहृतानां तुलसीपुष्पाणां च समर्पणम् ।
अन्यावशिष्टनिर्मुक्तपुष्पाणां च समर्पणम् ॥ ९५९ ॥

छिन्नभिन्नातिरिक्तानां पुष्पाणां च समर्पणम् ।
स्वाङ्गभूगलितानां च निवृत्तानां समर्पणम् ॥ ९६० ॥

तत्रार्केरण्डपत्राद्यैराहृतानां समर्पणम् ।
निर्गन्धकुसुमार्चा च तुलसीरहितार्चनम् ।
अप्रक्षाल्य च पुष्पाणि प्रक्षाल्य तुलसीं तथा ॥ ९६१ ॥

'समर्पणम्' इति शतापराधस्तोत्रे

एवं तुलसीपुष्पपत्राण्यन्यानि यानि च ।
समित्कुशपलाशादीनाहरेत विचक्षणः ॥ ९६२ ॥

अतसी तुलसी धात्री पुष्पपत्रफलानि च ।
सचूतपल्लवफलान्यर्चनार्थं समाहरेत् ॥ ९६३ ॥

स्कान्दे-

योऽतसीपुष्पमालाद्यैः अलङ्कृत्य तथा स्वयम् ।
स्कन्धे धृत्वाऽर्चयेद् विष्णुं स च स्वर्गाधिपो भवेत् ॥ ९६४ ॥

स्त्रियो माल्येन वा विष्णुं पूजयेत्तुलसीदलैः ।
तास्सर्वपातकैर्मुक्ता यान्ति विष्णोः परं पदम् ॥ ९६५ ॥

तुलसीमणिमालां च गले धृत्वाऽर्चयेद्धरिम् ।
सालिग्रामनिवासस्थं न स याति यमालयम् ॥ ९६६ ॥

यो दूर्वाग्रैः कुशाग्रैश्च अर्चयेत् कार्तिकेऽच्युतम् ।
वस्त्रैः विचित्रवर्णैश्च लभते फलमुत्तमम् ॥ ९६७ ॥

मन्दारैः पारिजातैश्च पुन्नागैश्च कदम्बकैः ।
अन्यैश्च पुष्पजातैश्च पूजयेत्पुरुषोत्तमम् ॥ ९६८ ॥ इति ।

दवनैः मुडिवालैश्च पूजते यो हरिं सदा ।
एवं सम्पाद्य विधिवत्पूजयेत्साधनानि तु ॥ ९६९ ॥

गृहं गत्वा तु नद्यादौ माध्याह्नं स्नानमाचरेत् ।
अर्घ्यं दत्वाथ सूर्याय तदुपास्तिं विधाय च ॥ ९७० ॥

उदित्यमिति मन्त्रैस्तु गायत्रीं विधिवज्जपेत् ।
अथाग्रोदकपात्राणि शोधयित्वा विधानतः ॥ ९७१ ॥

लिखित्वा व्याहृतेर्यन्त्रं जले यन्त्रं प्रपूरयेत् ।
कलशेषूदकं विष्णुगायत्र्या वस्त्रशोधितम् ॥ ९७२ ॥

अनरच्छायपतनमनखस्पृष्टमेव च ।
अजान्वधोवलम्बनं वस्त्राच्छादितमञ्जसा ॥ ९७३ ॥

आहरेत्स्तोत्रपाठादिपूर्वकं कलशोदकम् ।
गृहं गत्वाथ संस्थाप्य देवगेहे शुचिस्थले ॥ ९७४ ॥

पादौ प्रक्षाल्य चाचम्य कुर्याद् गन्धाक्षतादिकम् ।
शुद्धतोयेन पश्चात्तदनखस्पर्शमञ्जसा ॥ ९७५ ॥

(तुलसीकाष्ठगन्धं समर्पणीयम्)

वायुपुराणे-

यो दद्यात्तुलसीगन्धम् अपि सर्षपमात्रकम् ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥ ९७६ ॥

श्रीखण्डचन्दनोन्मिश्रं यो गन्धं विष्णवेऽर्पयेत् ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वैकुण्ठे मोदते नित्यं दशपूर्वैर्दशापरैः ॥ ९७७ ॥

अगन्धं पूजयेद् यस्तु माघे माधवमव्ययम् ।
नारकीं यातनां भुक्त्वा विड्वराहो भवेद् ध्रुवम् ॥९७८॥ इति च ।

[७०]श्रीखण्डं चन्दनं वापि तुलसीकाष्ठसंयुतम् ।
कर्पूरागरुसंयुक्तं दत्वा माधवतोषभाक् ॥ ९७९ ॥ इति च ।

शालीयान् तण्डुलान् रम्यान् हरिद्राचूर्णसंयुतान् ।
अक्षतांश्चार्पये तुभ्यं गृहाण पुरुषोत्तमम् ॥ ९८० ॥इति च ॥

**प्रादक्षिण्येन कुर्वीत शुद्धगन्धाक्षितादिकम् ।**
**प्राङ्मुखोदङ्मुखो वा न प्रत्यग्दक्षिणामुखः ॥ ९८१ ॥**

(चन्दनमाहात्म्यकथनम्)

स्कान्दे -

चन्दनस्य प्रवक्ष्यामि माहात्म्यं श्रुणु पुत्रक ।
यस्मिन् कृते भवेत्प्रीतिः ममात्यन्तं न संशयः ॥ ९८२ ॥

---

७०. श्रीण्ड

सचन्दनं सकुङ्कुमं कर्पूरागरुमिश्रितम् ।
मृगनाभिसमायुक्तं जाजीफलसमन्वितम् ॥ ९८३ ॥

तुलसीचन्दनोपेतं ममात्यन्तसुखावहम् ।
यो ददाति च मां नित्यं तुलसीकाष्ठचन्दनम् ।
युगानि वसते स्वर्गे ह्यनन्तानि नरोत्तम ॥ ९८४ ॥

महाविष्णोः कलौ भक्त्या दत्वा तुलसिचन्दनम् ।
योऽर्चयेन्मालतीपुष्पैर्न भूयस्तनपो भवेत् ॥ ९८५ ॥

तुलसीकाष्ठसम्भूतं चन्दनं यच्छते मम ।
दहामि पातकं सर्वं पूर्वजन्मशतैःकृतम् ॥ ९८६ ॥

सर्वेषामपि जीवानां तुलसीकाष्ठचन्दनम् ।
पितृणां च विशेषेण सदाभीष्टं यथा मम ॥ ९८७ ॥

श्रीखण्डचन्दनं तावच्छ्रेष्ठं कृष्णागरुस्तथा ।
[७१]यावन्न दीयते पुण्यं तुलसीकाष्ठचन्दनम् ॥ ९८८ ॥

कलौ यच्छन्ति ये मह्यं तुलसीकाष्ठचन्दनम् ।
मार्गशीर्षे शुभे मासे ते कृतार्था न संशयः ॥ ९८९ ॥

यो हि भागवतो भूत्वा कलौ तुलसिचन्दनम् ।
नार्पयेच्च सहोमासे न स भागवतो नरः ॥ ९९० ॥

कुङ्कुमागरुश्रीखण्डकर्दमैर्मम विग्रहम् ।
आलिलिम्पेत्सहोमासे कल्पकोटिं वसेद्दिवि ॥ ९९१ ॥

---

७१. यावद् दृश्यते

कर्पूरागरुमिश्रेण चन्दनेनानुलेपयेत् ।
मृगदर्पविशेषेण अभीष्टं च सदा मम ॥ ९९२ ॥

विलेपयन्ति ये वै मां शङ्खे कृत्वा तु चन्दनम् ।
मार्गशीर्षे तदा प्रीतिं करोमि शतवार्षिकीम् ॥ ९९३ ॥

नखस्पृष्टं न कुर्वीत गन्धपुष्पाक्षतादिकम् ।
यतोऽपवित्रं तत्तस्मात्सर्वथा वर्जयेद् बुधः ॥ ९९४ ॥ इति च ।

सफलैः कदलीस्तम्भैः चूतपल्लवतोरणैः ।
इक्षुदण्डैरलङ्कृत्य मण्टपं सुमनोहरम् ॥ ९९५ ॥

पुष्पैः फलैः पङ्कजैश्च केतकीकुसुमैरपि ।
नारिकेलैश्च पुन्नागैरलङ्कुर्यात्तु मण्टपम् ॥ ९९६ ॥

पूगीफलैश्च जम्बीरैः चम्पकाशोककिंशुकैः ।
साधनैश्च शुभैर्दिव्यैः शोभयेन्मण्टपं सुधीः ॥ ९९७ ॥

(देवपूजापद्धतिः)

गुरुश्चेत्तत्र वर्तेत आदौ गत्वा नमेद् गुरुम् ।
किञ्चिद् उपायनं दत्वा दण्डवत्प्रणमेन्मुदा ॥ ९९८ ॥

सम्प्रणम्य हरिं मध्वं तत्त्वदेवान् हरेर्गृहम् ।
उपद्वारं समागम्य भक्त्या कुर्याच्छ्रियै नमः ॥ ९९९ ॥

(द्वारपालनमनम्)

जयाय विजयायाथ बलाय प्रबलाय च ।
नन्दाय च सुनन्दाय कुमुदाय तथैव च ॥ १००० ॥

कुमुदाक्षायेति मन्त्रैर्नमोऽन्तैर्द्वारपान्नमेत् ।
चतुर्भुजान् वेत्रपाणीन् चक्रशङ्खगदाधरान् ॥ १००१ ॥

पीताम्बरादिश्रीचिह्नैरङ्किताङ्गान्नमाम्यहम् ।
[७२]द्वारपालान्नमस्कृत्य प्रथमे द्वारि पद्मज ।
ब्रह्मवायू नमस्कृत्य दुर्गां लक्ष्मीं तथैव च ॥ १००२ ॥

(कवाटोद्घाटनम्)

तदनुज्ञामवाप्याथ वायवाया हि दर्शत ।
अनेन वायुमन्त्रेण समुत्पाट्य कवाटकम् ॥ १००३ ॥

कृत्वा तालत्रयं द्वारदेहलीमस्पृशन् विशेत् ।
दक्षिणाङ्घ्रिं पुरस्कृत्य दीपमुद्दीपयेत्ततः ॥ १००४ ॥

'अग्निनाग्नि'रिति मन्त्रेण वर्तिकां तु प्रबोधयेत् ।
'घृतं मिमिक्षे'ति मन्त्रेण घृतं तत्र प्रपूरयेत् ॥ १००५ ॥

'तैलाभ्यङ्गे'ति मन्त्रेण तैलं वा तत्र पूरयेत् ।
तैलाभ्यञ्जे सुदीप्तेऽस्मिंस्तदा देवं प्रकल्पयेत् ॥ १००६ ॥

अश्विनावन्तको वह्निः विधुः सौम्येन्दुभो हरः ।
रविर्बृहस्पतिः शेषः पितरो भग एव च ॥ १००७ ॥

अर्यमा सविता त्वष्टा वायुरिन्द्राग्निभस्तथा ।
मित्रः शक्रो निर्ऋतिश्च आपो विश्वो हरिर्वसुः ॥ १००८ ॥

---

७२. द्वारपाला नत्वा

शतभिषग्वरुणः पूर्वप्रोष्टपादादयस्त्रयः ।
पूषा चैतेसप्तविंशदृक्षदेवाः क्रमात् स्मृताः ॥ १००९ ॥

सर्वे चैते स्तम्भदेवाः पाददेवो हिमांशुमान् ।
नालदेवो ह्यहिमगुःपात्रसंस्थोऽग्निरुच्यते ।
एवं सञ्चित्य दीपस्य स्तम्भे पुष्पं समर्पयेत् ॥ १०१० ॥

(भूतोच्चाटनम्)

वीक्षया पुष्पक्षेपेण पाणिघातत्रयेण च ।
दिवान्तरिक्षभूमिष्ठान् विघ्नान् उत्साधयतेत्सुधीः ॥ १०११ ॥

अपसर्पन्तु ये भूताः ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया ॥ १०१२ ॥

इमं मन्त्रं पठन् सम्यक् कुर्यात्तालत्रयं बुधः ।
भूतानुच्चाटयेनाराचमुद्रया बन्धयेद्दिशः ॥ १०१३ ॥

(ब्रह्मपारस्तोत्रपठनम्)

[७३]आरुह्य वेदिकां पश्चात् ब्रह्मपारस्तवं पठेत् ।
ज्ञानतोऽज्ञानतो वापि यस्तु घण्टामवादयेत् ।
राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् ॥ १०१४ ॥

(मानुषगन्धनिवर्तनम्)

निवृत्य मानुषं गन्धं 'येभ्यो माते'ति मन्त्रतः ।
कल्पयित्वा यवनिकाम् 'एवापित्रे'ति मन्त्रतः ॥ १०१५ ॥

---

७३. अस्त्यद्य

(घण्टायामनुसन्धेयाः देवाः)

घण्टानादं ततः कुर्याद्देवताह्वानलाञ्छनम् ।
घण्टायां ब्रह्मदैवत्यं मुकुटे रुद्रदैवतम् ॥ १०१६ ॥

स्मरेत् सरस्वतीं देवीं नाले नागाधिपं तथा ।
नाले प्रजापतिं देवं पूजयेत्पुष्पसञ्चयैः ॥ १०१७ ॥

घण्टायां वसते लक्ष्मीः जिह्वायां वायुरूर्जितः ।
तस्मात्सर्वप्रयत्नेन घण्टानादं समाचरेत् ॥ १०१८ ॥

(घण्टानादेनानिष्टनिवृत्तिरिष्टावाप्तिश्च)

आगमार्थं तु देवानां गमनार्थं तु राक्षसाम् ।
कुरु घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥ १०१९ ॥

स्कान्दे -

स्नानार्चनक्रियाकाले घण्टानादं करोति यः ।
पुरतो मम देवेश तस्य पुण्यफलं श्रुणु ॥ १०२० ॥

वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।
वसते मामके लोके अप्सरोगणसेवितः ॥ १०२१ ॥

सर्ववाद्यमयी घण्टा सर्वदा मम वल्लभा ।
वादनाल्लभते पुण्यं कल्पकोटिशतोद्भवम् ॥ १०२२ ॥

घण्टानादः सदा कार्यः पूजाकाले विशेषतः ।
सर्ववाद्यमयी घण्टा सर्वदेवमयी यतः ॥ १०२३ ॥

तस्मात्सर्वप्रयत्नेन घण्टानादं तु कारयेत् ।
मन्वन्तरसहस्राणि मन्वन्तरशतानि च ।
प्रीतो भवामि सततं घण्टानादेन पुत्रक ॥ १०२४ ॥

(पूजाकाले नानावाद्यघोषश्रवणं माङ्गलिकम्)

भेरीशङ्खनिनादेन घण्टानादान्वितेन च ।
मृदङ्गशङ्खेन युतं पणवेन समन्वितम् ॥ १०२५ ॥

अर्चनं मम देवेश शुभदं मोक्षदं नृणाम् ।
यत्र तिष्ठति पुरतो घण्टा नामाङ्किता मम ।
अर्चना वैष्णवी यत्र तत्र मां विद्धि पुत्रक ॥ १०२६ ॥

(वैनतेयाङ्किता चक्राङ्किता वा घण्टा वादनीया)

वैनतेयाङ्किता घण्टा सुदर्शनयुता च वा ।
ममाग्रे स्थापयेद् यस्तु तस्य गेहे वसाम्यहम् ॥ १०२७ ॥

मदर्चनस्य वेलायां घण्टानादं करोति यः ।
नश्यन्ति सर्वपापानि तस्य जन्मार्जितान्यपि ॥ १०२८ ॥

स्वकरेण प्रकुर्वन्ति घण्टानादं स्वशक्तितः ।
ममैवार्चनवेलायां फलं कोटिगुणोद्भवम् ॥ १०२९ ॥

यो मामर्चति देवेशं सुपर्णोपरि संस्थितम् ।
शङ्खपद्मगदायुक्तं सचक्रं च श्रियान्वितम् ॥ १०३० ॥

किं करिष्यन्ति ते तीर्थैः देवतानां च दर्शनैः ।
किं यज्ञैः किं व्रतैर्वापि किं दानैः किमुपोषणैः ॥ १०३१ ॥

मूर्तिं नारायणीं ये तु मामकीं गरुडोपरि ।
स्थापयन्ति कलौ यान्ति कल्पकोटिपदं मम ॥ १०३२ ॥

ममाग्रे स्थापयेद् यस्तु प्रासादेऽथ गृहेऽथवा ।
तीर्थकोटिसहस्राणां तत्र तिष्ठन्ति देवताः ॥ १०३३ ॥

यस्तु पूजयते धन्यो गरुडोपरि संस्थितम् ।
एकादश्यां तथा रात्रौ घण्टावादनसंयुतम् ।
कृत्वा गीतं च नृत्यं च तारयेन्नरकात् पितॄन् ॥ १०३४ ॥

पुनस्ते कथयिष्यामि श्रुणु घण्टामहं सुत ।
मम नामाङ्किता घण्टा पुरतो यत्र तिष्ठति ।
अर्चना वैष्णवी यत्र तत्र मां विद्धि पुत्रक ॥ १०३५ ॥

मम नामाङ्कितां घण्टां सुदर्शनयुतां यदि ।
ममाग्रे स्थापयेद् यस्तु गेहे तत्र वसाम्यहम् ॥ १०३६ ॥

यस्तु वादयते घण्टां वैनतेयविचिह्निताम् ।
धूपे नीराजने स्नाने पूजाकाले विलेपने ।
ममाग्रे प्रत्यहं वत्स प्रत्येकं लभते फलम् ॥ १०३७ ॥

मखायुतं गोयुतं च चान्द्रायणशतोद्भवम् ।
वह्निबाह्यकृता पूजा सफला जायते नृणाम् ? ॥ १०३८ ॥

घण्टानादेन तुष्टोऽहं प्रयच्छामि स्वकं पदम् ।
नागारिचिह्निता घण्टा रथाङ्गेन समन्विता ॥ १०३९ ॥

वादनात्कुरुते नाशं जन्ममृत्युभयस्य च ।
गरुडेनाङ्कितां घण्टां नादयेत्प्रत्यहं मुदा ॥ १०४० ॥

प्रीतिं करोमि देवेश लक्ष्मीं प्राप्य यथाऽधनः ।
घण्टादण्डस्य शिखरे सचक्रं स्थापयेत्तु यः ॥ १०४१ ॥

मत्प्रियं वैनतेयं वा स्थापितं भुवनत्रयम् ।
घण्टानादं सचक्रं च अन्त्यकाले श्रुणोति यः ।
पापकोटियुतस्यापि नश्यन्ति यमकिङ्कराः ॥ १०४२ ॥

सर्वे दोषाः प्रणश्यन्ति घण्टानादे कृते मम ।
देवतानाम् ऋषीणां च पितृणामुत्सवो भवेत् ॥ १०४३ ॥

अभावे वैनतेयस्य चक्रस्यापि न संशयः ।
घण्टानादेन भक्तानां प्रसादं प्रकरोम्यहम् ॥ १०४४ ॥

गृहे यस्मिन् भवेन्नित्यं घण्टानागारिसंयुता ।
सर्पाणां न भयं तत्र नाग्निविद्धिट्समुद्भवम् ॥ १०४५ ॥

यस्य घण्टा गृहे नास्ति शङ्खेन पुरतो मम ।
कथं भागवतो नाम गीयते तस्य देहिनः ॥ १०४६ ॥

वायुपुराणे -

घण्टानादं तु यः कुर्यात् पूजाकाले महात्मनः ।
स्तूयमानो देवगणैः विष्णुलोके महीयते ॥ १०४७ ॥

घण्टानादविहीनं तु यः कुर्यदेवतार्चनम् ।
स भुक्त्वा नरकान् घोरान् स मूकबधिरो भवेत् ॥ १०४८ ॥

ततो यवनिकां त्यक्त्वा शयानं देवमीक्ष्य च ।
अनन्तानन्तशयनेत्येवमुक्त्वा नमेद् हरिम् ॥ १०४९ ॥

'सकुमिवतिते'ति मन्त्रेण मुखवस्त्रं विसर्जयेत् ।
'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेणोद्बोधयेद् हरिम्
आयताभ्यामिति हरेः प्रार्थयेदवलोकनम् ॥ १०५० ॥

यज्जन्मनः प्रभृति मोहवशङ्गतेन
नानापराधशतकं चरितं मया ते ॥
अन्तर्बहिश्च सकलं तव पश्यतो मे
क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥ १०५१ ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ १०५२ ॥

मयि स्थितो मदङ्गेषु स्वतन्त्रो व्याप्तवान् हरिः ।
स सर्वः स्वात्मतन्त्रोऽपि स्वेच्छयाऽवर्तयत्यजः ॥ १०५३ ॥

भगवन् यन्मया कर्म शुभं कारयते प्रभुः ।
तत्सर्वं विष्णुपूजाऽस्तु प्रियतां मे जनार्दनः ॥ १०५४ ॥

जयाच्युत जयानन्त जय कृष्ण हरे प्रभो ।
जय माधव [७४]लक्ष्मीशेत्युक्त्वा विष्णुं प्रपूजयेत् ॥ १०५५ ॥

### (निर्माल्यविसर्जनम्)

'वैष्णव्या चैव गायत्र्या' समुत्पाट्य च सम्पुटम् ।
ततो विसृज्य निर्माल्यं 'लक्ष्मीसूक्तादि'मन्त्रतः ॥ १०५६ ॥

७४. लक्ष्मीश त्यक्त्वा

देवस्य वामभागे तु निक्षिपेद् रुद्रमूर्धनि ।
'कद्रुद्राये'ति मन्त्रेण कस्मिंश्चित् पात्र एव हि ॥ १०५७ ॥

'भद्रं कर्णेभि'रिति च सालिग्रामादिकं तथा ।
प्रक्षाल्य पात्रे निक्षिप्य स्नानीये पीठसंस्थिते ॥ १०५८ ॥

पीठं संशोध्य वस्त्रेण तुलसीपुष्पादिभिस्तथा ।
सच्छत्र सूर्यपानाद्यैरलङ्कुर्यात्ततः परम् ।
प्रतिमां स्थापयेत्तत्र 'निषुसीदे'ति मन्त्रतः ॥ १०५९ ॥

आराध्यसे प्राणभृतां प्रणेत्रा
प्राणाधिनाथेन समीरणेन ।
नारायणज्ञानसुखैकपूर्ण
स्वामिन्नमः श्रीरमण प्रसीद ।
इति प्राणनाथं च प्रार्थयेत्सुसमाहितः ॥ १०६० ॥

(मण्टपध्यानम्)

मण्टपं च तथा ध्यायेद्धेमरत्नोपमण्डितम् ।
'उत्तप्तोज्वलकाञ्चनेन रचित'मित्याद्यैर्मन्त्रसङ्घैः ॥ १०६१ ॥

ततः पूजासाधनानां द्रव्याणां निर्मलानि च ।
पात्राणि निक्षिपेत् धीमान् यथास्थानमतन्द्रितः ॥ १०६२ ॥

कलशान् सप्त वा पञ्च स्थापयेद्देवसन्निधौ ।
गन्धाक्षतार्थमेकं तु नैवेद्यार्थमतः परम् ॥ १०६३ ॥

तृतीयं स्वादूदकार्थं चतुर्थं शङ्खविभ्रमे ।
पञ्चमं पूर्णकुम्भं तु निर्माल्योत्सर्जने परम् ॥ १०६४ ॥

ततो यवनिकां त्यक्त्वा शयानं देवमीक्ष्य च ।
अनन्तानन्तशयनेत्येवमुक्त्वा नमेद् हरिम् ॥ १०४९ ॥

'सक्तुमिवतिते'ति मन्त्रेण मुखवस्त्रं विसर्जयेत् ।
'उत्तिष्ठ ब्रह्मणस्पते' इति मन्त्रेणोद्बोधयेद् हरिम्
आयताभ्यामिति हरेः प्रार्थयेदवलोकनम् ॥ १०५० ॥

यज्जन्मनः प्रभृति मोहवशङ्गतेन
नानापराधशतकं चरितं मया ते ॥
अन्तर्बहिश्च सकलं तव पश्यतो मे
क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥ १०५१ ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ १०५२ ॥

मयि स्थितो मदङ्गेषु स्वतन्त्रो व्याप्तवान् हरिः ।
स सर्वः स्वात्मतन्त्रोऽपि स्वेच्छयाऽवर्तयत्यजः ॥ १०५३ ॥

भगवन् यन्मया कर्म शुभं कारयते प्रभुः ।
तत्सर्वं विष्णुपूजाऽस्तु प्रियतां मे जनार्दनः ॥ १०५४ ॥

जयाच्युत जयानन्त जय कृष्ण हरे प्रभो ।
जय माधव [७४]लक्ष्मीशेत्युक्त्वा विष्णुं प्रपूजयेत् ॥ १०५५ ॥

(निर्माल्यविसर्जनम्)

'वैष्णव्या चैव गायत्र्या' समुत्पाट्य च सम्पुटम् ।
ततो विसृज्य निर्माल्यं 'लक्ष्मीसूक्तादि'मन्त्रतः ॥ १०५६ ॥

---

७४. लक्ष्मीश त्यक्त्वा

देवस्य वामभागे तु निक्षिपेद् रुद्रमूर्धनि ।
'कद्रुद्राये'ति मन्त्रेण कस्मिंश्चित् पात्र एव हि ॥ १०५७ ॥

'भद्रं कर्णेभि'रिति च सालिग्रामादिकं तथा ।
प्रक्षाल्य पात्रे निक्षिप्य स्नानीये पीठसंस्थिते ॥ १०५८ ॥

पीठं संशोध्य वस्त्रेण तुलसीपुष्पादिभिस्तथा ।
सच्छत्र सूर्यपानाद्यैरलङ्कुर्यात्ततः परम् ।
प्रतिमां स्थापयेत्तत्र 'निषुसीदे'ति मन्त्रतः ॥ १०५९ ॥

आराध्यसे प्राणभृतां प्रणेत्रा
प्राणाधिनाथेन समीरणेन ।
नारायणज्ञानसुखैकपूर्ण
स्वामिन्नमः श्रीरमण प्रसीद ।
इति प्राणनाथं च प्रार्थयेत्सुसमाहितः ॥ १०६० ॥

(मण्टपध्यानम्)

मण्टपं च तथा ध्यायेद्धेमरत्नोपमण्डितम् ।
'उत्तप्तोज्वलकाञ्चनेन रचित'मित्याद्यैर्मन्त्रसङ्ग्रहैः ॥ १०६१ ॥

ततः पूजासाधनानां द्रव्याणां निर्मलानि च ।
पात्राणि निक्षिपेत् धीमान् यथास्थानमतन्द्रितः ॥ १०६२ ॥

कलशान् सप्त वा पञ्च स्थापयेद्देवसन्निधौ ।
गन्धाक्षतार्थमेकं तु नैवेद्यार्थमतः परम् ॥ १०६३ ॥

तृतीयं स्वादूदकार्थं चतुर्थं शङ्खविभ्रमे ।
पञ्चमं पूर्णकुम्भं तु निर्माल्योत्सर्जने परम् ॥ १०६४ ॥

अवान्तरस्थपूजार्थं सप्तमं तद्विदो विदुः ।
शङ्खभ्रमणनैवेद्यं समर्पणमथैकतः ।
पृथगुद्धृत्य कुर्वीत कलशानां तु पञ्चके || १०६५ ||

स्कान्दे -

सम्प्रदायानुरोधेन शङ्खं स्थाप्य ममाग्रतः ।
दूर्वाङ्कुरैश्च तुलसीगन्धोदेन च पूरितम् || १०६६ ||

दक्षिणे गन्धपुष्पाणां पात्रं संस्थाप्य देशिकः ।
वामभागे न्यसेत् कुम्भं वस्त्रपूतं सुवासितम् || १०६७ ||

पुरतो मम घण्टां च [७५]दिक्षु दीपान्नियोजयेत् ।
अन्यत्सर्वं साधनं च यथास्थाने च विन्यसेत् || १०६८ ||

अर्घ्यपाद्याचमनीयमधुपर्कस्य कारणम् ।
विन्यसेत्पुरतो मह्यं दत्वार्घ्यं पात्रकाणि वै || १०६९ ||

सिद्धार्थाक्षतपुष्पाणि कुशाग्रतिलचन्दनम् ।
फलं यवाश्वतुर्वत्क्र अर्घ्यपात्रे विनिक्षिपेत् || १०७० ||

दूर्वा विष्णुपदी श्यामा पद्मं चैव चतुर्थकम् ।
पानपात्रे न्यसेत् पुत्र देशिको मम तुष्टये || १०७१ ||

तक्कोलं च लवङ्गं च फलं मालतिसम्भवम् ।
कुर्याद्वै श्रद्धया पुत्र पात्रे आचमनीयके || १०७२ ||

दिव्यं पयोदधिमधुघृतखण्डसमन्वितम् ।
मधुपर्कस्य पात्रे वै दद्याद्वै श्रद्धयार्चकः || १०७३ ||

---

७५. दक्षिणे

उक्तानां द्रव्यजातीनामलाभे पत्रपुष्पकैः ।
तत्तद्भावनया कुर्यात् सर्वदा विधिकोविदः ॥ १०७४ ॥ इति ।

अर्घ्यं वायुपदे प्रोक्तं नैऋत्यां पाद्यमेव च ।
ईशे त्वाचमनं विद्यात् स्नानीयं चाग्निकोणके ।
मधुपर्कं प्रोक्षणं च मध्ये स्थाप्य च पूजयेत् ॥ १०७५ ॥ इति ।

(पञ्चामृतपात्रविन्यासः)

पञ्चामृतानां पात्राणि विन्यसेत् पुरतो हरेः ।
वायव्यां क्षीरपात्रं तु ईशान्ये दध्यमत्रकम् ॥ १०७६ ॥

आग्नेये घृतपात्रं तु मधुपात्रं तु नैऋतौ ।
मध्ये तु शर्करापात्रं विन्यसेद् विधिकोविदः ॥ १०७७ ॥ इति ।

(भूतोच्चाटनम् आसनपरिकल्पनं च)

छोटिकामुद्रया कार्यं भूतोच्चाटनमच्युत ।
पृथिवी त्वयेति मन्त्रेण पृथिवीं प्रार्थयेत्ततः ॥ १०७८ ॥

आसने मण्डले चेन्द्रे कूर्मस्कन्धेऽहमास्थितः ।
कल्पयित्वेत्थमासीनो व्याहृतेर्भूर्भुवस्स्वरोम् ॥ १०७९ ॥

इत्यासनमुपस्पृश्य मण्डूकाय नमस्तथा ।
कूर्मायाथ वराहाय शेषाय च नमो नमः ॥ १०८० ॥

नमः कालाग्निरुद्राय वज्राय च ततो नमेत् ।
सानुस्वारं सादिवर्णं प्रणवादिमुदीर्य च ॥ १०८१ ॥

नमोऽन्तमिति चैतेषु षट्सु चैवं नमेद् बुधः ।
उक्तेषु वक्ष्यमाणेषु स्थानेष्वन्येषु सर्वशः ॥ १०८२ ॥

पूजाविधौ च देवानां पीठावरणयोर्वदेत् ।
तत्तन्नाम चतुर्थ्यन्तं प्रणवादि नमोन्तकम् ॥ १०८३ ॥

**(दिग्बन्धनं प्रार्थनं च)**

ततोऽस्त्रायफटित्युक्त्वा दिशो बन्धेच्च मुद्रया ।
प्राकारावास्थितं वह्निं ध्यात्वा मुद्रां सुदर्शनीम् ॥ १०८४ ॥

[७६]दर्शयेदथ चेन्द्रादिदिक्षु बध्नामि चाष्टसु ।
नमश्चक्राय स्वाहेति मन्त्रमेतमुदीरयेत् ॥ १०८५ ॥

नमः शङ्खाय खड्गाय पद्माय च वज्राय च ।
गदायै शार्ङ्गायाथ वनमालायै स्वाहेत्यपि ।
ततः स्तुत्यादि सङ्कीर्त्य स्थितं देशं च संस्मरेत् ॥ १०८६ ॥

अनन्तकल्याणगुणैकसिन्धु-
श्रीविष्णुना प्रेरितमानसोऽहम् ।
तस्यैव वीर्येण बलेन तेजसा
सञ्जीवितस्वान्तवपुः षडिन्द्रियः ॥ १०८७ ॥

प्रीत्यर्थमस्यैव करोमि पूजां
विप्रप्रविष्टं खलु तन्त्रसारे ।
ब्रह्माण्डसाहस्रपते दयालो
भक्त्या यथाशक्ति यथैवसंवित् ॥ १०८८ ॥

वाय्वग्निवरुणानां च बीजानि च यथाक्रमात् ।
प्रत्येकं सम्पुटीकृत्य प्रणवेन सबिन्दुना ।
एभिः कार्यं क्रमात्पादकरसन्धिषु शोधनम् ॥ १०८९ ॥

७६. दर्शयेद्थचन्द्रादि

(पापपुरुषनिरसनम्)

ततः सर्वगुरून्नत्वा हृदयाधिष्ठितं हरिम् ।
सुषुम्नामार्गतो नीत्वा विनिदध्याच्च मूर्धनि ॥ १०९० ॥

ततश्च 'ब्रह्महत्ये'ति ध्यायेत्पापं च पूरुषम् ।
आनीय नाभिदेशे तु वायुबीजेन शोषयेत् ॥ १०९१ ॥

हृद्यग्निबीजतो ज्वाल्य भस्म वा मनसा त्यजेत् ।
वायुं संरुध्य नासाभ्यां व्याहृत्या प्रणवेन वा ॥ १०९२ ॥

बहिर्निस्सारयेत्पापं भस्मरूपमथाचरेत् ।
वारुणेनाथ बीजेन शिरस्थामृतधारया ॥ १०९३ ॥

प्लावयेत्सर्वगात्राणि कृत्वात्मानं ततो हृदि ॥
प्राणायामत्रयं कृत्वा तत्त्वन्यासं ततः परम् ॥ १०९४ ॥

(मातृकान्यासाङ्गन्यासादिकं कार्यम्)

मातृकान्यसनं कृत्वा प्राणानायम्य मूलतः ।
अक्षरन्यासपूर्वं तु ध्यात्वोद्यद्भास्वदित्यथ ॥ १०९५ ॥

पूजाङ्गमिति मूलं च जपेदष्टोत्तरं शतम् ।
पुनश्चाक्षरविन्यासं कृत्वा ध्यायेद् हरिं पुनः ॥ १०९६ ॥

स्कान्दे -

करन्यासं ततः कुर्यादङ्गन्यासं तथैव च ।
पञ्चाङ्गं वा षडङ्गं वा विन्यसेत्सम्प्रदायतः ॥ १०९७ ॥

ममानुस्मरणं कार्यम् आत्मानं मत्समं स्मरेत् ।
पूजारम्भे चतुर्वक्त्र मङ्गलं शान्तिकं पठेत् ॥ १०९८ ॥ इति ॥

(कलशे भगवद्रूपाणि)

कलशं पूजयेत्पश्चादाह्वयेद्देवताशतम् ।
मातृका एकपञ्चाशच्चतुर्विंशच्च मूर्तयः ॥ १०९९ ॥

केशवाद्यास्तथाविश्वतैजसप्राज्ञतुर्यकाः ।
आत्मान्तरात्मपरमात्मज्ञानात्मा वासुदेवकः ॥ ११०० ॥

सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धो मत्स्यकच्छपौ ।
कोलो नृसिंहः सवटुर्जामदग्य्रघूद्वहौ ॥ ११०१ ॥

[77]वाशिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।
शिंशुमारश्चेति शतं मूलमूर्त्या समन्वितम् ।
आहूय देवतापूजां सान्निध्यं कलशे बुधः ॥ ११०२ ॥

(पञ्चकलशस्थापनप्रयोजनम्)

नैवेद्यप्रोक्षणार्थं च पञ्चपात्रप्रपूरणे ।
पानीयार्थं पृथक्चैवं कलशत्रितयं भवेत् ॥ ११०३ ॥

पात्रप्रक्षालनार्थं तु गन्धाद्यर्थमिति द्वयम् ।
पञ्चैव कलशाः प्रोक्ताः सम्भवे सति साधयेत् ॥ ११०४ ॥

तदभावे त्रयोऽपि स्युर्यद्वा द्वावप्यसम्भवे ।
सर्वेषामप्यभावे च भिन्नपात्रणि कल्पयेत् ।
एकस्मादेव पश्चात्तं कलशं पूजयेत्ततः ॥ ११०५ ॥

---

७७. वासिष्टयादवा

(कलशपूजनम्)

'कलशस्य मुखे विष्णुः' इत्याद्यैर्मन्त्रसङ्ग्रहैः ।
पाणिभ्यां कलशं स्पृष्ट्वा विष्ण्वादींश्चिन्तयेत् सुरान् ॥११०६॥

सागरांश्च तथा सप्तद्वीपानपि वसुन्धराम् ।
ऋगादिवेदान् साङ्गांश्च कलशे चिन्तयेत्सुधीः ॥ ११०७ ॥

अत्र गायत्री सावित्री सरस्वती शान्तिः पुष्टिकरी तथा ।
आयान्तु देवपूजार्थम् अभिषेकार्थमादरात् ॥ ११०८ ॥

'गङ्गे च यमुने चैवे'त्युक्त्वा सन्निधिमर्थयेत् ।
'इमं मे गङ्गेति यमुने'त्यादिकं जपेत् ॥ ११०९ ॥

'सर्वक्षेत्रे'ति मन्त्रेण कलशं प्रार्थयेत्ततः ।
शङ्खचक्रगदापद्मधेनुताक्ष्यादिमुद्रिकाः ॥ १११० ॥

दर्शयित्वाऽष्टवारं च मूलमन्त्रं जपेत्ततः ।
पीठावरणयोः पूजां कृत्वा सर्वोपचारकैः ।
पूजयित्वा समर्प्याथ शङ्खपूजां समाचरेत् ॥ ११११ ॥

(शङ्खपूजनम्)

स्कान्दे -

अथ सम्पूजयेच्छङ्खं पाञ्चजन्यं मम प्रियम् ।
यस्य सम्पूजनाद् वत्स आनन्दः परमो मम ॥ १११२ ॥

शङ्खस्य पूजने वत्स मन्त्रानेतानुदीरयेत् ।
'शङ्खं चन्द्रार्कदैवत्य'मित्याद्युक्त्वा प्रपूजयेत् ॥ १११३ ॥

पञ्चोपचारैर्गायत्र्या शङ्खे वारि प्रपूरयेत् ।
पञ्चमुद्राः प्रदर्श्याथ मूलं द्वादशकं जपेत् ॥ १११४ ॥

ततस्तु प्रार्थयेच्छङ्खं 'त्वं पुरे'त्यादिमन्त्रतः ।
'त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ १११५ ॥

नमितस्सर्वदेवैश्च पाञ्चजन्य नमोऽस्तुते ।
तव नादेन जीमूताः विद्रवन्ति सुरासुराः ॥ १११६ ॥

शशाङ्कायुतदीप्ताभ पाञ्चजन्य नमोऽस्तुते ।
गर्भा देवारिनारीणां विशीर्यन्ते सहस्रधा ॥ १११७ ॥

तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ।
दर्शनेनैव शङ्खस्य किं पुनः स्पर्शनेन तु ॥ १११८ ॥

विलयं यान्ति पापानि [७८]हिमवद्भास्करोदये ।'
नत्वा शङ्खं करे धृत्वा मन्त्रेणानेन वैष्णवः ।
यः स्नापयति भक्त्या तु तस्य पुण्यमनन्तकम् ॥ १११९ ॥ इति ।

ततः पश्चात्तु कुर्वीत पञ्चपात्रप्रपूजनम् ।
अर्घ्ये तु दानमुद्रा स्यात् पाद्ये चाञ्जलिमुद्रिका ॥ ११२० ॥

गोकर्णमुद्रा चाचामे मधुपर्के च सूकरी ।
स्नाने तु हंसमुद्रा स्याल्लक्षणं तु निबोधयेत् ॥ ११२१ ॥

अर्घ्यपात्रे महालक्ष्मी पानपात्रे पितॄंस्तथा ।
रतिराचमनीये तु स्नानीये वरुणं तथा ॥ ११२२ ॥

---

७८. हिमवान् भास्करोदये

मधुपर्के प्रोक्षणीये लक्ष्मीनारायणौ न्यसेत् ।
एतैः पञ्चोपचारैश्च पूजयेत्पात्रदेवताः ॥ ११२३ ॥

**(पञ्चामृते अनुसन्धेयभगवद्रूपाणि)**

एवं पञ्चामृतानां च देवताः पूजयेत्क्रमात् ।
क्षीरं गोविन्ददैवत्यं दधि वामनदैवतम् ॥ ११२४ ॥

आज्यं च विष्णुदैवत्यं मधु श्रीमधुसूदनम् ।
शर्कराच्युतदैवत्या तस्मात्तानर्चयेद् बुधः ॥ ११२५ ॥

तुलसीदलयुक्तेन शङ्खतोयेन पूर्वकम् ।
पूजाद्रव्याणि सर्वाणि प्रोक्ष्य पीठं प्रपूजयेत् * ॥ ११२६ ॥

**(हृदये जले चक्राब्जादिमण्डले वा पूजा कार्या)**

हृदये वाचले वापि जले वा केवलस्थले ।
चक्राब्जं परिकल्प्याऽत्र भगवन्तं प्रपूजयेत् ॥ ११३० ॥

पद्मं वृत्तत्रयं चक्रं तब्दहिः वृत्रयुग्मकम् ।
शोभोपशोभिके चैव चक्राब्जस्य तु लक्षणम् ॥ ११३१ ॥

पद्मायै नमः । वृत्तत्रयायै नमः । चक्राय नमः । वृत्तयुग्माय नमः । शोभायै नमः । उपशोभायै नमः । चक्राब्जाय नम इति पीठपूजा ।

---

*. क्षीराद्दशगुणं दध्नः घृतं चैव दशोत्तरम् ।
घृताद्दशगुणं क्षौद्रं स्वादूदं च दशोत्तरम् ॥ ११२७ ॥
दशापराधं तोयेन क्षीरेण क्षमते शतम् ।
सहस्रं क्षमते दध्ना घृतेन क्षमतेऽयुतम् ॥ ११२८ ॥
मधुना क्षमते लक्षमिक्षुणा दशलक्षकम् ।
नारिकेलाम्बुना कोटिमनन्तं गन्धवारिणा ॥ ११२९ ॥

तन्त्रसारे-

'पूज्यश्च भगवान्नित्यं चक्राब्जादिकमण्डले ।
हृदयेत्यारभ्य ततोऽनन्तं योगपीठस्वरूपं पूजयेद्धरेः ॥'

इत्यन्तम् उक्तं ध्येयम् ।

पीठपूजां विधायाथ तत्रावाह्येति सूक्ततः ।
हरिमावाहयेद् भक्त्या तद्विधिः प्रोच्यतेऽधुना ॥ ११३२ ॥

अधोमुखं हृत्कमलं वायुबीजेन सम्मुखम् ।
कुर्यात्ततोऽस्य मुकुलं ज्ञानार्केण प्रकाशयेत् ॥ ११३३ ॥

तत्कर्णिकायां वह्न्यर्कशशिबिम्बान्यनुक्रमात् ।
त्रयं त्रयीमयं तस्मात् चिन्तयेत् वैष्णवो नरः ॥ ११३४ ॥

नानारत्नमयं पीठं तेषामुपरि चिन्तयेत् ।
तस्मिन् मृदुश्लक्ष्णतरकालार्कसदृशद्युतिम् ॥ ११३५ ॥

अष्टैश्वर्यदले पद्मे मन्त्राक्षरमनुस्मरेत् ।
[७९]तस्मिन् देव्या सहासीनं कोटिशीतांशुसन्निभम् ॥ ११३६ ॥

चतुर्भुजं सुन्दराङ्गं शङ्खचक्रगदाधरम् ।
पद्मपत्रविशालाक्षं सर्वलक्षणलक्षितम् ॥ ११३७ ॥

श्रीवत्सकौस्तुभोरस्कं पीतवस्त्रधरं च माम् ।
विचित्राभरणैर्युक्तं दिव्यमण्डलमण्डितम् ॥ ११३८ ॥

दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पोपशोभितम् ।
तुलसीकोमलदलैर्वनमालाविभूषितम् ॥ ११३९ ॥

७९. तस्मिंनेव्यासहासीनं

बालार्ककोटिसदृशं कान्त्या देव्या श्रिया सह ।
सर्वलक्षणलक्षण्या समाश्लिष्टतनुं शिवम् ॥ ११४० ॥

'उद्यद्भास्वत्' इति ध्यात्वा जपेन्मन्त्रं समाहितः ।
सहस्रं शतवारं वा यथाशक्ति जपेन्मनुम् ॥ ११४१ ॥

मनसैवार्चनं कृत्वा स पुष्पतुलसीकरः ।
कृताञ्जलिपुटो भूत्वा 'आत्मा देवे'त्यचं पठेत् ।
मूलमन्त्रं ततो जप्त्वा यद्यात्मार्थं प्रपूजयेत् ॥ ११४२ ॥

(स्वार्थपूजायामावाहनक्रमः)

एह्येहि मम हृत्पद्मस्थितश्रीपुरुषोत्तम ।
आवाहयामि पीठे त्वां प्रतिमायां रमापते ॥ ११४३ ॥

द्विरुच्चार्यैवमावाह्य तमावाहनमुद्रया ।
ततः प्रार्थनमुद्रां च विधाय प्रार्थयेद् हरिम् ॥ ११४४ ॥

'सान्निध्यं कुरु देवेश सर्वसम्पत्करो मम ।
विभो सकलदेवेश विष्णो जिष्णो हरे प्रभो ॥ ११४५ ॥

त्वां भक्त्या पूजयाम्यद्य भोगैरर्घ्यादिभिः क्रमात् ।
उपचारैः षोडशभिः सङ्गृहाण नमोऽस्तु ते ॥ ११४६ ॥

यागावसानपर्यन्तमत्र स्थित्वा जनार्दन ।
भक्तस्य मम पूजां त्वं गृहीत्वा पाहि मां प्रभो ॥ ११४७ ॥

बिम्बोऽसि प्रतिबिम्बोऽस्मि तव मेऽह्यन्तरं महत् ।
स्वामिन्निर्दोष मद्दोषं विरेचय नमोऽस्तु ते ॥ ११४८ ॥

हृदयस्था हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः ।
यद्वशे वर्तते जीवः सा तु जीवकला स्मृता' ॥ ११४९ ॥

सम्प्रार्थ्यैवं जगन्नाथं मुद्रा आवाहनादिकाः ।
षण्मूलमन्त्रपूर्वं तु तन्त्रमर्थमुदीरयेत् ॥ ११५० ॥

आवाहनं स्थापनं च सान्निध्यं सन्निरोधनम् ।
सम्मुखीकरणं चैव अवगुण्ठनमेव च ।
[८०]प्रदर्श्यैताश्च षण्मुद्राः स्नानार्थं प्रार्थयेत्ततः ॥ ११५१ ॥

### (परार्थपूजायां सूर्यान्तर्गतो हरिरावाह्यः)

परार्थं यदि पूजा स्यात् सूर्याद्यन्तःस्थितं हरिम् ।
आवाह्य पूर्ववत्कार्यं सर्वमावाहनादिकम् ॥ ११५२ ॥

एह्येहि भगवान् विष्णो स्नानार्थं मज्जनालयम् ।
सम्प्रार्थ्यैवं गिराविष्णोरित्त्यृचा पादुकार्पणम् ॥ ११५३ ॥

स्नानालयं समायान्तं ध्यात्वा नारायणं विभुम् ।
स्थापयेत् स्थानपीठे तं 'भद्रं कर्णेभि'रित्र्यचा ।
पुनस्तत्रापि षण्मुद्राः कुर्यादावाहनादिकाः ॥ ११५४ ॥

### (स्नातुमागताय हरयेऽर्घ्यादिसमर्पणम्)

ततोऽर्घ्यं मूलमन्त्रेण पाद्यमाचमनीयकम् ।
मधुपर्कं ततो दद्यात् पुनराचमनं तथा ॥ ११५५ ॥

आदौ देवाञ्जलावर्घ्यं ददामीति विचिन्तयन् ।
दद्यात् पात्रे तु कस्मिंश्चिद्धस्तं प्रक्षालयेद् हरेः ॥ ११५६ ॥

---

८०. प्रदश्यं ता

प्रोक्षणीयोदकेनैव ततः पाद्यं समर्पयेत् ।
पुनः प्रक्षालयेद् हस्तमेवं शेषं समर्पयेत् ॥ ११५७ ॥

यदा चार्घ्यादिकं देयं तदा तत्पात्रगं जलम् ।
पात्रान्तरेण चोद्धृत्य दत्वा पुष्पं समर्पयेत् ॥ ११५८ ॥

पात्रत्रितयपक्षेऽपि [८१]दद्यादुक्तक्रमेण तु ।
पात्राणामप्यलाभे तु दद्याच्छङ्खोदकेन तु ॥ ११५९ ॥

पुनः सम्प्रोक्ष्य शङ्खं तु पूर्ववत् पूजयेत्सुधीः ॥
त्रिवारं मधुपर्कं तु दातव्यं मूलमन्त्रतः ॥ ११६० ॥

पुनश्चाचमनं दत्वा निर्माल्यं तद् विसर्जयेत् ।
दन्तधावनगण्डूषं दर्पणालोकनानि तु ॥ ११६१ ॥

अभ्यञ्जनं च गन्धोद्वर्तनं मूलमन्त्रतः ।
कृत्वा शङ्खोदकेनैव देवेशमभिषेचयेत् ॥ ११६२ ॥

'आप्यायस्व', 'दधिक्राव्णो', 'घृतं मिमक्ष' इत्यृचः ।
'मधुवाता' तथा 'स्वादु'रिति मन्त्रान् समूलकान् ॥ ११६३ ॥

पञ्चामृतैः क्रमेणैतैः मन्त्रैस्संस्नापयेद्धरिम् ।
गवां क्षीरं दधि घृतं मधुशर्करयान्वितम् ।
पञ्चामृतमिदं ज्ञेयं स्नानार्थं श्रीहरेः सदा ॥ ११६४ ॥

---

८१. दद्यादुत्क्रमणेन तु

(क्षीरादिनाभिषेके फलविशेषोपवर्णनम्)

स्कान्दे -

भगवानुवाच

क्षीरस्नानं प्रकुर्वीत ये नरा मम मूर्धनि ।
शताश्वमेधजं पुण्यं बिन्दुना बिन्दुना स्मृतम् ॥ ११६५ ॥

क्षीराद्दशगुणं दध्ना घृतेन च दशोत्तरम् ।
क्षीरस्नानेन सौभाग्यं दध्ना पृष्टान्नभोजनम् ॥ ११६६ ॥

घृतेन स्नापयेद् यो मां नरो मम पुरं विशेत् ।
कारयेद् यो मधुस्नानं भक्त्या वै मार्गशीर्षके ॥ ११६७ ॥

स राजा जयते लोके पुनः स्वर्गादिभोगतः ।
क्षीरमादाय शङ्खेन क्षीरस्नानादिकारकः ॥ ११६८ ॥

मार्गशीर्षे स्नापयेन्माम् अश्वमेधफलं लभेत् ।
गन्धपुष्पोदमात्रं तु सर्वोत्कृष्टं प्रशस्यते ॥ ११६९ ॥

शङ्खे कृत्वा तु पानीयं साक्षात्तु कुसुमान्विताम् ।
यः स्नापयेत्सहोमासे सर्वतीर्थफलं लभेत् ॥ ११७० ॥

(अनेकवारं शङ्खेनाभिषेके महत्फलम्)

शङ्खाष्टकेन यः स्नानं कारयेन्मार्गशीर्षके ॥
भक्त्या भागवतः श्रेष्ठो मम लोके महीयते ॥ ११७१ ॥

शङ्खंषोड्शकेनाथ यः स्नापयति मां सुत ।
स पापमुक्तः सुचिरं स्वर्गलोके महीयते ॥ ११७२ ॥

चतुर्विंशतिसङ्ख्याकैः शङ्खैः यः स्नापयेच्च माम् ।
इन्द्रलोके चिरं स्थित्वा स राजा भुवि जायते ॥ ११७३ ॥

शङ्खेनाष्टोत्तरशतं स्नापयेन्मार्गशीर्षके ।
शङ्खे शङ्खे सुवर्णस्य फलं प्राप्नोति मानवः ॥ ११७४ ॥

मार्गशीर्षे भक्तिमान् यः शङ्खपञ्चशतैर्हि माम् ।
स्नापयेत् पितरस्तस्य स्वर्गे तावत्प्रतिष्ठिताः ॥ ११७५ ॥

अष्टोत्तरसहस्रं तु शङ्खस्नानं तु यश्चरेत् ।
सगणो मुक्तिमाप्नोति यावदाभूतसम्प्लवम् ॥ ११७६ ॥

नित्यं स स्नापयेद् यो मां शङ्खेन सुरसत्तम ।
गङ्गास्नानफलं प्राप्य नित्यं नन्दति देववत् ॥ ११७७ ॥

**(श्रीहरेः स्नानवासोविभूषणादिसमर्पणम्)**

शङ्खतोयं समादाय यः स्नापयति मां सुत ।
नमो नारायणेत्युक्त्वा मुच्यते सर्वकिल्बिषैः ॥ ११७८ ॥

नाद्यं तटाकगं वापि वापीकूपादिकं च यत् ।
गाङ्गेयं जायते सर्वजलं शङ्खे कृतं शुभ ॥ ११७९ ॥

त्रैलोक्ये यानि तीर्थानि मम चैवाज्ञया सुत ।
शङ्खे तानि वसन्तीह तस्माच्छङ्खो वरः स्मृतः ॥ ११८० ॥

ततः शुद्धोदकस्नानं कारयेत्परमात्मनः ।
'पौरुषं' 'वैष्णवं' 'घार्मं' 'यस्ते मन्यो' समग्रकम् ॥ ११८१ ॥

'य इन्दोरेकवर्गं' च पवमानत्रिवर्गकम् ।
'समुद्रादूर्मि'रित्येव 'जितन्तेस्तोत्रतः' स्नपेत् ॥ ११८२ ॥

वादित्रनिनदैरुच्चैर्गीतमङ्गलनिःस्वनैः ।
यः स्नापयति मां भक्त्या जीवन्मुक्तो भवेद्धि सः ॥ ११८३ ॥

ततः सम्मार्जनं वस्त्रं पीतं च परिधानकम् ।
ततः सर्वाङ्गभूषाश्च नूपुरादिकिरीटकः ॥ ११८४ ॥

ध्यात्वा विभूषणं [८२]किञ्चिन्नवमप्यर्पयेत्सुधीः ।
यज्ञोपवीतं दत्वा तु आसने चोपवेशयेत् ॥ ११८५ ॥

सन्ध्यार्घ्यं विष्णुगायत्र्या दद्यादर्घ्यत्रयं ततः ।
अभिषेकात्पुरा वापि पश्चाद्वा परमात्मनः ॥ ११८६ ॥

तत्त्वन्यासादि ध्यानान्तं कृत्वा पूजां समाचरेत् ।
आसनस्थहरिं स्पृष्ट्वा मूलं द्वादशकं जपेत् ॥ ११८७ ॥

अर्पयेद्गन्धपुष्पाणि मूलेन तुलसीं तथा ।
ततश्चक्रायुधादीनि पूजयेत् क्रमतो दश ॥ ११८८ ॥

दुर्गा चक्राधिदवी स्यात् श्रीश्च शङ्खाधिदेवता ।
वायुर्गदाधिदेवः स्याद्भूमिः पद्माभिमानिनी ॥ ११८९ ॥

दुर्गेति खड्गदेवी स्यात् शार्ङ्गश्चैव सरस्वती ।
पञ्चप्राणाः पञ्चशराः विरिञ्चः कौस्तुभः स्मृतः ।
श्रीरेव वनमालायां लक्ष्मी श्रीवत्सके तथा ॥ ११९० ॥

८२. कश्चन्नावमप्यर्पयेत्सुधीः

(आवरणपूजा)

अथावरणपूजायां लक्ष्मीं वामेऽर्चयेत् सुधीः ।
धरां च दक्षिणे पार्श्वे ततः पूर्वादिदिक्षु च ॥ ११९१ ॥

क्रुद्धोल्काय महोल्काय वीरोल्काय तथैव च ।
द्युल्काय च स्वाहान्तेभ्यो नमः शब्देन पूजयेत् ।
सहस्रोल्कायेति तथा आग्नेयादि च कोणतः ॥ ११९२ ॥

पुनः पूर्वादिकोणेषु वासुदेवादिकान् यजेत् ।
मायां जयां कृतिं शान्तिम् आग्नेयादिषु पूजयेत् ॥ ११९३ ॥

केशवादींस्ततो मूर्तीर्द्वादश क्रमतो यजेत् ।
देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् ॥ ११९४ ॥

तदादिपरिवाराणां मत्स्याद्यावरणानि च ।
ईशान्यां विश्वरूपस्य क्रमेणानेन पूजनम् ॥ ११९५ ॥

अनन्तादीन् चतुर्दिक्षु सभार्यान् पुरतो हरेः ।
तद्वामभागे गरुडं सौपर्णीमपि पूजयेत् ॥ ११९६ ॥

इन्द्रादींश्च सपत्नीकान् परिग्रहसमन्वितान् ।
पूर्वादि स्वस्वस्थानेषु पूजयेत्क्रमतः सुधीः ॥ ११९७ ॥

शेषमाग्नेयकोणेषु वायव्यां विधिमर्चयेत् ।
सपरिग्रहकाः पूज्या द्वादश द्वारपालकाः ॥ ११९८ ॥

प्रथमो वज्रनाभश्च हरीश्वरस्ततः परम् ।
तृतीयो गङ्गतनयः ततः शङ्खनिधीश्वरः ॥ ११९९ ॥

[८३]जयश्च विजयः पश्चाज्जातो सप्तमतो मतः ।
विधाता च ततो भद्रः सुभद्रोऽथामरेश्वरः ॥ १२०० ॥

विरूपश्चान्तिमश्चैव नमः शब्देन पूजयेत् ।
'वनस्पत्युद्भव' इति मन्त्रैर्मूलपुरःसरम् ॥ १२०१ ॥

धूपदीपौ समर्प्याथ स्तोत्रैर्नानाविधैरपि ।
स्तुत्वा ध्यात्वा हरिं सम्यक् नैवेद्यं चार्पयेद् बुधः ॥ १२०२ ॥

(नैवेद्यसमर्पणक्रमः)

देवस्य पुरतो रम्यं मण्डलं चतुरस्रकम् ।
कृत्वा श्रीबीजमालिख्य न्यसेदन्नादिभाजनम् ॥ १२०३ ॥

वैष्णव्या चैव गायत्र्या जलमादाय मन्त्रवित् ।
अष्टाक्षरेण सम्मन्त्र्य गायत्र्या प्रोक्षयेत्ततः ॥ १२०४ ॥

प्रोक्षणोदकमादाय नैवेद्यं प्रोक्षयेद् बुधः ।
शङ्खतोयेन तत्प्रोक्ष्यं नैवेद्यं पद्मसम्भव ॥ १२०५ ॥

तुलसीदलानि निक्षिप्य धेनुमुद्रां प्रदर्शयेत् ।
गिरिमुद्रां शमीमुद्रां मन्त्रमष्टाक्षरं जपेत् ॥ १२०६ ॥

अश्विन्यन्तर्गतौ रामकृष्णावमृतवर्षिणा ।
प्रतोदकेन कुरुताममृतं भोज्यमञ्जसा ॥ १२०७ ॥

इति ध्यायन् स्वर्गसंस्थकामधेनोऽमृतं स्रव ।
नैवेद्यस्योपरित्युक्त्वा धेनुमन्त्रं जपन् बुधः ॥ १२०८ ॥

---

८३. यमश्च

संस्मरेत्परमं विष्णुं रत्नपीठसमास्थितम् ।
रमाब्रह्मादिभिर्देवैः सेव्यमानं सुरेश्वरम् ॥ १२०९ ॥

भक्तानामदनार्थाय भोक्तारं पूर्णषड्गुणम् ।
सस्नुषा च हरेः लक्ष्मीः स्नानं कारयति प्रभोः ॥ १२११ ॥

पीताम्बरं तु गरुड आसनं शेष एव च ।
इन्द्रस्तु कलशं गोपीचन्दनं मन्मथस्तथा ॥ १२११ ॥

इन्द्रस्तु शङ्खचक्रादिधारणाय जगत्पते ।
आदर्शं च ततो दद्यात् सूर्यचन्द्रौ रमापतेः ॥ १२१२ ॥

श्रीगन्धं च ततो दद्याद् वनमालां तथैव च ।
श्रीदेवी वनमालां च वैजयन्तीं तथा शिवः ॥ १२१३ ॥

पादुके वीन्द्र उद्दिष्टः कौस्तुभे तु विधिः स्मृतः ।
चूडारत्नं मरुद्देवः कुण्डलं शेष एव च ॥ १२१४ ॥

अन्नं सरस्वती कुर्याद् ब्रह्मा कुर्यात्तथा हरेः ।
सूपं कुर्यान्महालक्ष्मी घृतं नारायणाय वै ॥ १२१५ ॥

परमान्नं भारती कुर्यात् भक्ष्यं वायुर्जगत्पतेः ।
इन्द्रशच्यादिकाः कुर्यु उमा भोज्यानि वै हरेः ॥ १२१६ ॥

भक्ष्याणि चाग्निकोणेषु ईशान्यां पायसं न्यसेत् ।
नैऋत्यां लेह्यपेयादि वायव्यामुपभोजनम् ॥ १२१७ ॥

मध्ये चरुं स्थापयित्वा घृतपात्रं समर्पयेत् ।
अन्ने चन्द्रोऽभिमानी स्यात् केशवस्तत्र देवता ॥ १२१८ ॥

नारायणो भारती च परमान्नेऽधिदेवता ।
भक्ष्ये सूर्यो माधवश्च श्रीगोविन्दो घृते तथा ॥ १२१९ ॥

क्षीरे सरस्वती विष्णुर्मण्डे धाता मधोरिपुः ।
त्रिविक्रमो मरुच्चैव नवनीताधिदेवता ॥ १२२० ॥

वामनो [८४]दध्नि वरुणः श्रीधरो गरुडस्तथा ।
सूपे तु पत्रशाखे तु हृषीकेशश्च मित्रकः ॥ १२२१ ॥

शेषस्तु फलशाखे तु पद्मनाभस्तदीश्वरः ।
दामोदरश्चाम्रवर्तिसुपर्णी मानिनी स्मृता ॥ १२२२ ॥

मधुशाखो हरिः प्रोक्तस्तत्र सङ्कर्षणो विभुः ।
वासवो वासुदेवश्च गुडशर्करयोः स्मृतौ ॥ १२२३ ॥

नियामकस्तु प्रद्युम्नो मानी गुरुरुपस्करे ।
[८५]कटुद्रव्ये यमो देवोऽनिरुद्धस्तदीश्वरः ॥ १२२४ ॥

एलारामठकर्पूरेष्वनङ्गः पुरुषोत्तमः ।
औदलावणिके देवो जयन्तश्च ह्यधोक्षजः ॥ १२२५ ॥

दक्षो मानी माषभक्षे नृसिंहस्तत्र चेश्वरः ।
लड्डुकादिपदार्थेषु मनुः स्वायम्भुवोऽच्युतः ॥ १२२६ ॥

निऋतिर्लवणे देवो धीशस्तत्र जनार्दनः ।
प्राणो मरुदुपेन्द्रश्च फले फलरसेऽधिपः ॥ १२२७ ॥

---

८४. अब्धि ८५. कद्रुद्रव्यमयो

हरिदुर्गाऽथ ताम्बूले रतिः स्वादूदके बुधः ।
श्रीकृष्णस्तु पदार्थानां पाकशुद्धौ तु [८६]पुष्करः ॥ १२२८ ॥

हंसः स्वादुरसे विश्वो रतिः स्थाल्यां हुताशनः ।
भार्गवोऽधिपतिः काष्ठे वसन्तो ऋषभस्तथा ॥ १२२९ ॥

नैवेद्यमण्डले क्रोडो भूस्तदूर्ध्वं विनायकः ।
सनत्कुमारोऽभिमान्यावरणे पुरुषोत्तमः ॥ १२३० ॥

पात्रे तु वारुणी प्रोक्ता आनन्दो भोजनपात्रके ।
दुर्गाभिमानिनी सत्या सौपर्णी व्यञ्जने तथा ॥ १२३१ ॥

यज्ञोऽधिकारिषु ज्ञेयो [८७]मुख्यप्राणस्तु मानवान् ।
इति सञ्चित्य देवेशं लक्ष्मीरमणमव्ययम् ।
समर्पयेत्तु नैवेद्यं कृतकृत्यो भवेन्नरः ॥ १२३२ ॥

वासुदेवस्तु चान्नस्थो भक्ष्ये सङ्कर्षणस्तथा ।
प्रद्युम्नः परमान्नस्थ अनिरुद्धो घृते स्थितः ॥ १२३३ ॥

नारायणस्तु सर्वत्र इत्येवं ध्येयमञ्जसा ।
स्वामिन्नेतत् समस्तं तु भुङ्क्ष्व सम्यक् कृपानिधे ।
स्वसन्निधानतः पूतमेव भोक्ष्यसि नान्यथा ॥ १२३४ ॥

अतः सर्वत्र संवासं विशेषात्कुरु माधव ।
सन्निधानं प्रकुर्वन्तु तथा लक्ष्म्यादयः प्रभो ॥ १२३५ ॥

---

८६. पुष्पकः ८७. मयप्राणस्तु

यद्यपीश्वररूपैस्त्वं विविधैर्विषयैः शुभैः ।
अनन्तेन्द्रियसम्भूतैरतर्क्यैश्च रमादिभिः ॥ १२३६ ॥

अलौकिकमहानन्तरसगन्धादिसंयुतैः ।
गुणक्रियादिकैर्धर्मै रूपाद्यैश्च तथाविधैः ॥ १२३७ ॥

सन्तुष्टः सततं सर्वैः सर्वाकारैः सदागतैः ।
भोज्यं भोक्ता च भोगश्च भोजकश्च यतो भवान् ॥ १२३८ ॥

एकं वस्तु तथा भोक्ता भोज्यादिव्यवहारभाक् ।
महालक्ष्मीस्वरूपान्यप्यनन्तेन्द्रियगोचरान् ॥ १२३९ ॥

अनन्तरससद्गन्धपूर्वधर्मांस्तथाखिलान् ।
अतर्क्यान् स्वाननुभवसि तथा मुक्तस्वरूपकान् ॥ १२४० ॥

तथाखिलजडस्थांश्च सारानप्यखिलान् प्रभो ।
साराभिमानिनां देहे स्वयं सर्वत्र च स्थितः ॥ १२४१ ॥

तथा निवेद्य वस्तुस्थांस्तदाकारस्वरूपकान् ।
केवलान् भोक्षसे सारान् विष्णोर्न ह्यन्यतो रतिः ॥ १२४२ ॥

तत्तदाकारतां प्राप्तान् रमाब्रह्मादिकानपि ।
तथाविधान् भोक्षसे त्वं तत्तद्वस्त्वभिमानिनः ॥ १२४३ ॥

एवं सुपरिपूर्णोऽपि आत्मारामोऽनघोऽपि सन् ।
यथैव धर्मसन्तप्तः क्षुत्पिपासार्दितस्तथा ॥ १२४४ ॥

स्वमात्रभोग्यसारांश्च तथा लक्ष्म्याद्ययोग्यकान् ।
पृथक् पृथग्विधान् सारान् विवशेन ह्यवस्तुगान् ॥ १२४५ ॥

चिदानन्दघनैश्वर्यैरिन्द्रियैः स्वीकुरु प्रभो ।
नृभोग्यवस्तुसारांश्च दृष्ट्वा वै स्वीकुरु प्रभो ॥ १२४६ ॥

यद्यप्येतत् सर्वदेशे सर्वकालेष्वनन्तधा ।
अद्य त्वमपि कारुण्यात् भुङ्क्ष्व सम्यङ्मदर्पितम् ॥ १२४७ ॥

यद्यन्ममेन्द्रियैरन्तर्बाह्यैर्भोग्यमितः परम् ।
सर्वावस्थासु तत्सर्वम् अनुभुङ्क्ष्वाखिलेश्वर ॥ १२४८ ॥

[८८]सर्वरूपैरवयवैर्गुणाकारक्रियादिभिः ।
भुङ्क्ष्व यावद्ब्रह्मणस्तु तर्पकं स्यादिदं सदा ॥ १२४९ ॥

अखण्डैकरसत्वेपि सर्वानन्त्ययुतो यतः ।
पूर्णस्य भोक्तता नित्यं तुष्टस्याप्यद्य तुष्टता ॥ १२५० ॥

युक्तैवैश्वर्यरूपस्य अचिन्त्यैश्वर्यवारिधेः ।
दशाराडिव नैवेद्यं तत्सारं जिह्वयात्ति च ॥ १२५१ ॥

भगवद्भक्तशेषत्वं तत्तत्स्थूलस्य साम्प्रतम् ।
आगमिष्यत् सुखं चापि तच्चास्त्येव सदापि तु ॥ १२५२ ॥

तच्चाप्यचित्यशक्तित्वाज्जातं सुखमतीव च ।
भगवन् श्रीपते न्यस्तं नैवेद्यं त्वत्पुरो मया ॥ १२५३ ॥

कपिलात्मकदिव्येन चक्षुषा ह्यवलोकय ।
कृत्वा पवित्रं पूर्णं तु तत्र स्वादुरसैर्युतम् ॥ १२५४ ॥

---

८८. सर्वभूतै

नृसिंहात्मकदिव्येन घ्राणनाम्नेन्द्रियेण तु ।
तद्वस्तुनिष्ठगन्धं तु दिव्यमाघ्राय चिन्मयम् ॥ १२५५ ॥

भृगुरामस्वरूपेण दिव्यजिह्वेन्द्रियेण तु ।
आस्वादय स्वादुरसं भुङ्क्ष्व देव रमापते ॥ १२५६ ॥

एवमादि यथाशक्ति संस्मरेद् हरिभोजनम् ।
'सत्यं त्वर्तेन' मन्त्रेण परिषिच्य परेशितुः ॥ १२५७ ॥

हस्ते त्वापोशनं दद्यात् 'अमृतोपस्तरणं' त्विति ।
सुधारसं सुविपुलम् आपोशनमिदं तव ॥ १२५८ ॥

गृहाण कलशानीतं यथेष्टं भुज्यतां प्रभो ।
पञ्चप्राणाहुतीः दत्वा तत्तन्मन्त्रैस्ततः परम् ॥ १२५९ ॥

'भोजं त्वेति' ऋचं जप्त्वा 'मधुवाते'ति वै ऋचम् ।
'स्वादुःपवस्वे'ति ऋचा 'याः फलनी'रिति वै जपेत् ॥१२६०॥

परिवेषयन्तीशं श्रीः मुख्यप्राणस्तु वीजयेत् ।
भारत्याद्याः परिचरन्ति जयाद्याः द्वारपालकाः ॥ १२६१ ॥

अद्य तिष्ठति यत्किञ्चित् कल्पितं चापरं गृहे ।
पक्वमन्नं सपानीयं सर्वोपस्करसंयुतम् ॥ १२६२ ॥

यथाकालं मनुष्याद्यैः भोक्ष्यमन्नं शरीरिभिः ।
तत्सर्वं विष्णुपूजाऽस्तु प्रियतां मे जनार्दनः ॥ १२६३ ॥

सौवर्णैः स्थालिवर्यैर्मणिगणखचितैर्गोघृताक्तान् सुपकान्
भक्ष्यान् भोज्यांश्च लेह्यानपि परममहाचोष्यमन्नं निधाय ।

नानाशाखैरुपेतं दधिमधुसुघृतक्षीरपानीययुक्तं
ताम्बूलं चापि विष्णोः प्रतिदिवसमहं मानसं चिन्तयामि ॥१२६४॥

प्रथमं त्वोदनं प्रोक्तं लवणं व्यञ्जनादिकम् ।
लेह्यं पेयं च चोष्यं च खाद्यं चैव चतुर्विधम् ॥ १२६५ ॥

परमान्नं हरिद्रान्नं चित्रान्नं चोदनं तथा ।
गुडोदनं च मुद्गान्नमित्यन्नं षड्विधं स्मृतम् ॥ १२६६ ॥

नैवेद्यं पायसं भक्ष्यं नानाशाखैः समन्वितम् ।
हविष्यं घृतपक्वं च फलानि विविधानि च ॥ १२६७ ॥

श्रीनिवास नमस्तुभ्यं महानन्दविवर्धनम् ।
अपूपान् विविधान् स्वादून् [८९]शालीपिष्टप्रपाचितान् ॥ १२६८ ॥

पृथुलान् गुडसंयुक्तान् सजीरकमरीचकान् ।
कन्दमूलव्यञ्जनानि घृतमिश्रफलानि च ॥ १२६९ ॥

अन्नं चतुर्विधं शुद्धं क्षीरान्नगुडसंयुतम् ।
शुद्धोदकं शीतलं च कर्पूरैलादिवासितम् ॥ १२७० ॥

सार्धं सुदधि तक्रं च [९०]साक्षादमृतमेव च ।
मया निवेदितं सर्वं सङ्गृहाण श्रिया सह ॥ १२७१ ॥

खर्जूरं कदलीरसालपनसं द्राक्षाकपित्थादिकं
पूर्णं स्वाद्वमृतोपमं नवनवं सङ्गृह्यतामच्युत ।

---

८९. शालीपुष्प ९०. द्राक्षा

शष्कुल्यस्तिलमोदकाः गुडयुताः नानाविधा मोदकाः
फेनाभाः पृथुलाश्च शर्करयुताः द्राक्षेक्षुरम्भादयः ॥ १२७२ ॥

पूर्णानन्दमहोदधे प्रियतमा भल्लातकी दाडिमा-
च्चूतोर्वारुकनारिकेलबदरीमुख्यास्त्वदीये दिने ।
जम्बीरान् सुरसोपेतान् किञ्चिल्लवणमिश्रितान्
मरीचकेलासंयुक्तान्नामठेनाधिवासितान् ॥ १२७३ ॥

मुद्गांश्च चणकादींश्च स्वीकुरुष्व महाप्रभो ।
एवमादि यथाशक्ति सञ्चित्याष्टाक्षरं जपेत् ॥ १२७४ ॥

मन्त्रमष्टोत्तरशतं मुखमाच्छाद्य वस्त्रतः ।
समर्प्य तुलसीं दद्यादुत्तरापोशनं हरेः ॥ १२७५ ॥

करोद्वर्तनगण्डूषपादप्रक्षालनादि च ।
कारयित्वा महाविष्णोः पुनराचमनीयकम् ॥ १२७६ ॥

करवासो मुखवासः पादुके च समर्पयेत् ।
भोगसिंहासने स्वामिन् [९१]आगच्छेति विचिन्तयेत् ॥ १२७७ ॥

नानाविधैर्वाद्यघोषैर्विविधै राजवैभवैः ।
स्तुवद्भिरमरेशाद्यैः सहागतमनुस्मरेत् ॥ १२७८ ॥

ताम्बूलं च ततो दद्यात् श्रीनिवासाय भक्तिमान् ।
पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ॥ १२७९ ॥

---

९१. न गच्छेति

कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।
क्रमुकं ब्रह्मतत्त्वं तु विष्णुतत्त्वं तु पर्णकम् ॥ १२८० ॥

चूर्णमीश्वरतत्त्वं तु ताम्बूलं विनिवेद्य च ।
पुनर्धूपं च दीपं च वाद्यघोषपुरःसरम् ॥ १२८१ ॥

वैदिकैर्विविधैः स्तोत्रैः स्तुवन् विष्णोः समर्पयेत् ।
कुङ्कुमागरुकर्पूरदेवदारुसुगुग्गुलम् ॥ १२८२ ॥

उशीरं चन्दनं मुस्ताकोष्टं गोरोचनं तथा ।
गोघृतेन समायुक्तं दशाङ्गं धूपमर्पयेत् ॥ १२८३ ॥

वनस्पत्युद्भवो दिव्यो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १२८४ ॥

इति धूपं समर्प्याथ कुर्यान्नीराजनं हरेः ।
अनेकवर्तिसंयुक्तं गोघृतेन समन्वितम् ॥ १२८५ ॥

'अर्चत प्रार्चते'त्यादिश्रुतिस्मृतिपुराणगैः ।
मन्त्रैरारार्तिकं कृत्वा विष्णोस्तमवलोकयेत् ॥ १२८६ ॥

कोटयो ब्रह्महत्यानाम् अगम्यागमकोटयः ।
दहत्यालोकमात्रेण विष्णोस्त्वारार्तिकं मुखम् ॥ १२८७ ॥

आपादमौलिपर्यन्तं पश्यतः पुरुषोत्तमम् ।
पातकानि विनश्यन्ति किं पुनश्चोपपातकम् ॥ १२८८ ॥

मा गयां याहि कौरव्य मा काशीं मा च पुष्करम् ।
सुपूजितं हरिं दृष्ट्वा कृतकृत्यो भविष्यति ॥ १२८९ ॥

ततः 'परो मात्रये'त्यादिकैः मन्त्रैः समर्पयेत् ।
मन्त्रपुष्पाणि च ततः शङ्खे सम्पूजेज्जलैः ॥ १२९० ॥

वैष्णव्या चैव गायत्र्या पञ्चमुद्राः प्रदर्शयेत् ।
तुलसीदलं निधायात्र मन्त्रमष्टाक्षरं जपेत् ॥ १२९१ ॥

समाप्याष्टाक्षरजपं विष्णोः पूजां समर्पयेत् ।
मम देहेन्द्रियप्राणमनश्चेतनपूर्वकम् ।
प्रेरितं हरिणा सर्वं हरयेऽहं समर्पये ॥ १२९२ ॥

नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा त्वत्प्रसादेन नान्यथा ॥ १२९३ ॥

त्वद्भक्तिस्त्वत्फलं मह्यं त्वत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विभोः स्तृप्तिकरः सदा ॥ १२९४ ॥

न जाने कर्म यत्किञ्चिन्नापि लौकिकवैदिके ।
न निषेधविधी विष्णो तव दासोऽस्मि केवलम् ॥ १२९५ ॥

'यस्य स्मृत्ये'त्यर्पयित्वा विष्णोः पूजां रमादिकान् ।
पूजयेत्तीर्थतोयाद्यैः 'बळित्थे'त्यादिमन्त्रकैः ॥ १२९६ ॥

रमाब्रह्मादयो देवाः सनकाद्या शुकादयाः ।
श्रीलक्ष्मीनृसिंहप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥ १२९७ ॥

नैवेद्यमर्पयेदेवं भगवद्भुक्तशेषतः ।
वैश्वदेवार्थमुद्धृत्य पश्चात्पूजां समर्पयेत् ॥ १२९८ ॥

(अन्यदेवाः के ?)

''विष्णुवायू विना लक्ष्मीं शिवशेषादयः सुराः ।
अन्यदेवा इति प्रोक्ताः तद्भुक्तान्नादि वर्जयेत् ॥ १२९९ ॥

अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ।
रमेशार्पितमन्नाद्यं वायुर्भुङ्क्ते सुरेश्वरः ॥ १३०० ॥

तद्भुक्तान्नादनान्मर्त्यः दोषहीनो हरिं व्रजेत् ।
पवित्रं पवमानस्य भुक्तशेषं जगद्गुरोः ॥ १३०१ ॥

भुञ्जीत शुद्धभावेन भक्तिज्ञानविवर्धनम् ।
'सर्वं स पूतमश्नाती'त्येच्छ्रुत्युक्तमञ्जसा ॥ १३०२ ॥

तस्माद्वायूपभुक्तं तदन्नाद्यं ग्राह्यमेव हि ।
जगद्गुरुर्वायुदेवो निर्दोषः श्रीशवल्लभः ॥ १३०३ ॥

देवतायाः तदन्यस्याः नैवेद्यं वर्जयेद् बुधः ।
वायूपभुक्तमन्नाद्यमभोक्तव्यं तु यो वदेत् ।
स भुक्त्वा नरकान् घोरान् चण्डालो भुवि जायते'' ॥१३०४ ॥

**इति पाञ्चरात्रे नारायणसंहितायाम् ।**

सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतः सदा ।
स्वार्थं समर्पयेद् विष्णोः यथा प्राणे सुराः प्रभो ॥ १३०५ ॥

विष्णोः पुरस्तान्नत्वन्यां प्रतिमां पूजयेत् कचित् ।
वर्जयित्वा हनूमन्तं शेषं गरुडमेव च ॥ १३०६ ॥

ब्रह्माणं च शिवं सूर्यं हरेरावरणं विना ।
न च सम्पूजयेद्विप्रः स पाषण्डी भवेद् ध्रुवम् ॥ १३०७ ॥

**इति छान्दोग्यभाष्ये प्राणविद्याव्याख्याने।**

अष्टाक्षरादिमन्त्राणां जपानां पद्मसम्भव ।
अर्घ्यं दद्यात्तीर्थतोयैर्ब्रह्मयज्ञं समाचरेत् ॥ १३०८ ॥

भूयो भूयो नमस्कृत्वा [९२]प्रदक्षिणमथाचरेत् ।
विष्णोर्नैवेद्यशेषेण वैश्वदेवं ततश्चरेत् ॥ १३०९ ॥

**(तप्तोदके तण्डुलपाकः न कार्यः)**

तप्तोदकस्य मध्ये तु तण्डुलं पाचयेद् यदि ।
तदन्नं क्रिमिभिस्तुल्यं तुल्यं गोमांसभक्षणात् ॥ १३१० ॥

अन्नस्य चेद्रसं त्यक्त्वा वैश्वदेवं करोति यः ।
देवेभ्यः शापमाप्नोति दरिद्रो भवति ध्रुवम् ॥ १३११ ॥

तीर्थमिश्रेण कर्तव्यं वैश्वदेवं द्विजोत्तम ।
कोटिजन्मफलं याति मत्प्रीतिं च समाप्नुयात् ॥ १३१२ ॥

अष्टावष्टाक्षरेणैव पुंसूक्तेन च षोडश ।
महाव्याहृतिभिः कुर्यात् अनुयागफलं लभेत् ॥ १३१३ ॥

**इति अनुयागप्रतिनिधिवैश्वदेवविधिः ॥**

**(अन्नाभावे तण्डुलेन वा जलेन वा वैश्वदेवः कार्यः)**

अन्नाभावे वैश्वदेवं तण्डुलेन जलेन वा ।
अथवा मन्त्रमुच्चार्य वैश्वदेवं चतुर्विधम् ॥ १३१४ ॥

---

९२. प्रदक्षणं समाचरेत्

विना तिलान् विना दर्भान् विना रौप्यहिरण्मयैः ।
तुलसीं तु विना xxx तर्पणं तु निरर्थकम् ॥ १३१५ ॥

(ब्रह्मयज्ञतिलतर्पणे कार्ये)

सालिग्रामशिलातोयात्तर्पयेत् पितृदेवताः ।
तत्तोयममृतं ज्ञेयं तज्जलं सागरोपमम् ॥ १३१६ ॥

ब्रह्मयज्ञं प्रकुर्वीत प्रत्यहं तिलतर्पणम्
पितॄनुद्दिश्य पित्रादीन्निषिद्धदिवसं विना ॥ १३१७ ॥

भानुवारे भौमवारे नन्दाभद्रामखासु च ।
त्रयोदश्यां नवम्यां तु भरण्यां कृत्तिकासु च ॥ १३१८ ॥

अयनद्वितीये चैव चतुर्ष्वपि युगादिषु ।
गृहे मृताहे जन्मर्क्षे सन्ध्ययोश्च तथा निशि ॥ १३१९ ॥

पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।
निषिद्धदिवसे वारे नक्षत्रे च तथा तिथौ ॥ १३२० ॥

यस्तिलैस्तर्पणं कुर्यात्तज्जलं रुधिरं भवेत् ।
तीर्थे तिथिविशेषे च प्रेतकार्ये तथैव च ॥ १३२१ ॥

प्रेतपक्षे व्यतीपाते सङ्क्रान्तौ वैधृतावपि ।
निषिद्धेऽपि दिने कुर्यात्तिलयुक्तं तु तर्पणम् ॥ १३२२ ॥

अमृतं तु भवेत्प्रातः मध्याह्ने क्षीरवद् भवेत् ।
अपराह्ने भवेत्तोयं सायाह्ने रुधिरं भवेत् ।
श्राद्धाङ्गतर्पणं ह्येतत् मध्याह्ने नित्यतर्पणम् ॥ १३२३ ॥

सङ्कोचे तीर्थलाभे च प्रातरप्याचरेत्तत् ।
व्यतीपातश्च सङ्क्रान्तिर्वैधृतिर्वा यदा भवेत् ।
एकादश्यां तदा विद्वन् पावमानी ऋचः पठेत् ॥ १३२४ ॥

अथवा पितृसूक्तानि स्वस्वशाखोदितानि च ।
तेनैव [९३]तृप्तिमायान्ति पितरो हरिवासरे ॥ १३२५ ॥

यदि मोहात्प्रकुर्वन्ति मूढस्तस्मिन् दिने मम ।
पिण्डदानं तर्पणं च श्राद्धं होमादि किञ्चन ।
जलमूत्रसमं तच्च हव्यं कव्यं च विट्समम् ॥ १३२६ ॥ इति ।

आदौ पिता तथा माता सपत्नी जननी तथा ।
मातामहाः सपत्नीका आत्मपत्नी ततः परम् ॥ १३२७ ॥

सुतभ्रातृपितृव्याश्च मातुलाः सहभार्यकाः ।
दुहिता भगिनी चैव दौहित्रो भागिनेयकाः ॥ १३२८ ॥

पितृष्वसा मातृष्वसा स्वशुरो भावकस्तथा ।
शालको गुरुराचार्यस्वामिसख्युः यथाक्रमम् ॥ १३२९ ॥

आब्रह्मर्षिपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयाः ॥ १३३० ॥

अशीतिकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥ १३३१ ॥

ये के चास्मत्कुले जाताः अपुत्रा गोत्रजा मृताः ।
ते गृह्णन्तु मया दत्तं सूत्रनिष्पीडनोदकम् ॥ १३३२ ॥

९३. पितृ

विष्णोर्नैवेद्यशेषेण वैश्वदेवं ततश्चरेत् ।
अग्नौ ध्यात्वा च मद्बिम्बं जामदग्निसमद्युतिम् ॥ १३३३ ॥

तदग्नौ वैश्वदेवं च मम प्रीत्यै चरेद् बुधः ।
ये देवास्तत्र तिष्ठन्ति वैश्वदेवे तु कर्मणि ॥ १३३४ ॥

सर्वेष्वपि च मां ध्यायेत् सर्वकार्यार्थसिद्धये ।
तथा व्याहृतिदेवेषु चतूरूपं स्मरेत्सदा ॥ १३३५ ॥

अनिरुद्धश्च प्रद्युम्नः सङ्कर्षणस्तथैव च ।
वासुदेवस्तथा पुत्र चतूरूपं प्रकीर्तितम् ॥ १३३६ ॥

एतानि वह्निरूपाणि विश्वेदेवा पितृष्वपि ।
स्थित्वा सारं प्रगृह्णातु पितृणां गृहणाय वै ॥ १३३७ ॥

ब्राह्मणेष्वपि सर्वेषु ध्यायन्मासाधिदैवतम् ।
सर्वत्र मां समुद्दिश्य सर्वकर्म समाचरेत् ॥ १३३८ ॥

**(भगवदर्पितान्नेनैव वैश्वदेवः कार्यः)**

ब्रह्मा -

त्वदर्पितं तु नैवेद्यं कथं त्वं पुरुषोत्तम ।
गृह्णासि तदधिष्ठाने त्वदुच्छिष्टं यतः पुरा ॥ १३३९ ॥

हंसः -

यथाग्नौ संस्कृतं ह्याज्यं प्रागग्नावेव हूयते ।
मदर्पितं प्रगृह्णामि यज्ञहोमद्विजादिषु ॥ १३४० ॥

असङ्गोऽहं महाभाग तस्मान्मे नास्ति कर्मणा ।
बन्धनं पुरुषश्रेष्ठ मा शङ्की ह्यत्र पुत्रक ॥ १३४१ ॥

अयोग्यं तु यथा होमे घृतं संस्कारवर्जितम् ।
ऋते मदर्पितं प्राज्ञ यज्ञाद्यं विफलं लभेत् ॥ १३४२ ॥

मम नैवेद्यशेषेण ये निन्दन्ति मदर्पणम् ।
अधिष्ठानेषु देवेश ते यान्ति ह्यधरं तमः ॥ १३४३ ॥

प्रतिमायामर्पितं मे नार्पयेत् प्रतिमान्तरे ।
अग्निविप्राद्यधिष्ठाने ह्यर्पयेत्तु मदाज्ञया ॥ १३४४ ॥

यथाग्नौ संस्कृताज्यं तु नहि संस्कर्तुमर्हति ।
तथैव प्रतिमायां मे नार्पयेत्प्रतिमान्तरे ॥ १३४५ ॥

**इति पाञ्चरात्रे पञ्चत्रिंशाध्याये ।**

**(बलिहरणप्रशंसा)**

वैश्वदेवं ततः पश्चात् बलिकर्म विधानतः ।
क्रियते येन राजेन्द्र जितं तेन त्रिविष्टपम् ॥ १३४६ ॥

बलिकर्म प्रकुर्वन्ति चक्राकारं द्विजोत्तम ।
ते च वै चक्रिणो भूत्वा प्रयान्ति मम मन्दिरम् ॥ १३४७ ॥

राज्यकामो ध्वजाकारं पुत्रार्थी शूर्पवन्नृप ।
चक्राकारं तु मोक्षार्थी वल्मीकाद् बहुपुत्रता ॥ १३४८ ॥

चक्राकारप्रदातॄणामेतेषां फलदो ह्यहम् ।
एवं चतुर्विधं ज्ञेयं बलिकर्म नरोत्तम ॥ १३४९ ॥

चतुर्थं तु विहितं ज्ञेयं चक्राकारं नरोत्तम ।
मोक्षं वा प्रापयत्याशु कामांश्च विविधान् नृप ॥ १३५० ॥ इति ।

शेषधर्मे-

अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादग्निहोत्रदेवताभ्यः । सोमाय वनस्पतये । अग्नीसोमाभ्याम् । इन्द्राग्निभ्याम् । द्यावापृथिवीभ्याम् । धन्वन्तरये । इन्द्राय । विश्वेभ्यो देवेभ्यः । ब्रह्मणे स्वाहेति ।

(अथ बलिहरणविधिः)

एताभ्यश्चैव देवताभ्यो ओषधिवनस्पतिभ्यो
गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यो
इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो
वरुणाय वरुणपुरुषेभ्यो सोमाय सोमपुरुषेभ्यो
इति प्रतिदिशं ब्रह्मपुरुषेभ्य इति मध्ये
विश्वेभ्यो देवेभ्यः सर्वेभ्यो भूतेभ्यः
दिवाचारिभ्यो नक्तंचारिभ्यो रक्षोभ्य इत्युत्तरतः
स्वधा पितृभ्य इति प्राचीनावीति
शेषं दक्षिणे निनयेत्
अथ ग्रहबलिदेवतानां कीर्तयिष्यामो यत्र यत्र वसन्ति ते ।

[९४]द्वारे पितामहं विद्यात् प्रकीले च उमापतिम् ।
आग्नेय्यां बलभद्रं च यमं विष्णुं च दक्षिणे ॥ १३५१ ॥
नैऋत्यां स्कन्दवरुणौ सोमं सूर्यं च पश्चिमे ।
वायव्यामश्विनौ वसवः सौम्यो रुद्रस्तथोत्तरे ॥ १३५२ ॥

---

९४. दूरे

नक्षत्राणि च ग्रहाः पूर्वस्यां दिशि संस्थिताः ।

ग्रहमध्ये ब्रह्माणं प्रतिष्ठाप्य, प्रागादिदिक्षु सिद्धिवृद्धिश्रियै कीर्तिप्रदक्षिणम् । जलभाण्ड ⁹⁵XXXXXXXXXXXXX । वेदानां च ते च प्राङ्मुखः प्रोक्ष्य बलिं निवेदयेत् । 'ये भूता प्रचरन्ति दिवानक्तं बलिमिच्छन्तो विधुरस्य प्रेष्टास्तेभ्यो बलिं पुष्टिकामो ददामि । भूतानामधिपतिः मयि पुष्टिं दिशतु स्वाहा ।'

ऐन्द्रवारुणवायव्ययाम्यनैऋतकाश्च ये
ते काकाः प्रतिगृह्णन्तु भूम्यां पिण्डं मयोदितम् ॥ १३५३ ॥

श्वानौ द्वौ शामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां बलिं प्रदास्यामि रक्षेतां पथि मां सदा ॥ १३५४ ॥

सचाण्डालभूतपतितवायसेभ्यो अन्नं भूमौ निक्षिपेत् ।
प्रक्षाल्य च पाणिपादौ चाचम्य गृहं प्रवेशयेत् ॥ १३५५ ॥

'शान्ता पृथिवी'ति पठेत् ।

इति वैश्वदेवबलिहरणविधिः

**(सदाचारस्मृतिः)**

**इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।**
**दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् ॥ १३ ॥**

**भुक्तशेषं भगवतो भृत्यातिथिपुरःसरः ।**
**भुञ्जीत हृद्गतं विष्णुं स्मरन् तद्गतमानसः ।**
**आचम्य मूलमन्त्रेण कोष्ठं स्वमभिमन्त्रयेत् ॥ १४ ॥**

९५. अत्र मातृकाद्वयेऽपि ग्रन्थपातोऽनुभूयते

वेदशास्त्रविनोदेन प्रीणयन् पुरुषोत्तमम् ।
अहःशेषं नयेत्सन्ध्यामुपासीताथ पूर्ववत् ॥ १५ ॥

यामात्परत एवाथ स्वपेत् ध्यायञ्जनार्दनम् ।
अन्तराले ततो बुध्वा स्मरेत बहुशो हरिम् ॥ १६ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वाऽनुस्मृतस्वभावः ।
करोति यद्यत् सकलं परस्मै
नारायणायेति समर्पयेत्तत् ॥ १७ ॥

इति पञ्चरात्रे ।

(तीर्थप्राशनक्रमः)

प्रसादं धारयेत् पश्चात्तीर्थप्राशनपूर्वकम् ।
वस्त्रं तु त्रिगुणीकृत्य पाणौ पाणिं निधाय च ॥ १३५६ ॥

उपविश्यासने किञ्चित् शङ्खतोयं धरेत् पुरा ।
पादतोयं ततो धार्यं सर्वाङ्गे सर्वमङ्गलम् ॥ १३५७ ॥

त्रिः पिबेत् पादतोयं तु ततो वै पुरुषर्षभ ।
न पिबेच्छङ्खतोयं तु न क्षिपेत् भूतले तथा ॥ १३५८ ॥

न प्रोक्षयेत्तु नैवेद्यम् इति मे निश्चिता मतिः ।
अतिथिभ्यो उपाविश्य दत्वा गन्धाक्षतादिकान् ॥ १३५९ ॥

अन्नत्यागं ततः कृत्वा पश्चाद्भूते बलिं न्यसेत् ।
आपोशनं ततो दद्यात्तीर्थतोयेन भक्तितः ॥ १३६० ॥ इति ॥

तुलसीमिश्रितं तीर्थं त्रिः पिबेत् सततं नरः ।
एकादश्यामेकवारं तीर्थं तु तुलसीं विना ॥ १३६१ ॥

(शङ्खतीर्थप्रोक्षणं ब्रह्महत्यादिनाशकम्)

शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।
अङ्गलग्नं मनुष्याणां ब्रह्महत्याऽयुतं दहेत् ॥ १३६२ ॥

न ग्रहाः न च कूष्माण्डा पिशाचोरगराक्षसाः ।
दृष्ट्वा शङ्खोदकं मूर्ध्नि विद्रवन्ति दिशो दश ॥ १३६३ ॥

आजन्मकृतपापानां प्रायश्चित्तं यदीच्छसि ।
सालिग्रामशिलावारि पापहारि निषेव्यताम् ॥ १३६४ ॥

अकालमृत्युहरणं सर्वव्याधिनिवारणम् ।
सर्वदुरितोपशमनं विष्णुपादोदकं शुभम् ॥ १३६५ ॥

प्रथमं कायशुध्यर्थं द्वितीयं धर्मसाधनम् ।
तृतीयं मोक्षमाप्नोति एवं तीर्थं त्रिधा पिबेत् ॥ १३६६ ॥

खादन्मांसं पिबन्मद्यं सङ्गच्छन्नन्त्यजातिभिः ।
सद्य एव हि पूतात्मा कर्णे तुलसिधारणात् ॥ १३६७ ॥

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
निर्माल्यं तीर्थतोयं च मस्तके यस्य सोऽच्युतः ॥ १३६८ ॥

(अष्टादशतुलसीदलानि स्वीकार्याणि)

चतुः कर्णे मुखे चैकं नाभावेकं तथोदरे ।
शिरस्येकं तथा प्रोक्तं तीर्थे त्रीणि तथा क्रमात् ॥ १३६९ ॥

अन्नोपरि तथा पञ्च भोजनान्ते दलत्रयम् ।
एवं श्रीतुलसी धार्या अष्टादश मनीषिभिः ॥ १३७० ॥

विष्णोरङ्गारशेषेण योऽङ्गानि परिमार्जयेत् ।
दुरितानि विनश्यन्ति व्याधयो यान्ति खण्डशः ॥ १३७१ ॥

श्रीनिवासस्य दत्तेन धूपेन परिवासितम् ।
शान्ताङ्गारं ललाटाग्रे धारयेद् विष्णुतत्परः ॥ १३७२ ॥

कौतुकं श्रुणु मे देवि विष्णोः निर्माल्यवह्निना ।
तापितं नाशमायाति ब्रह्महत्यादिपातकम् ॥ १३७३ ॥

(नैवेद्यपरिवेषणक्रमः)

प्रसादं धारयित्वैवं पात्राण्यासादयेद् बुधः ।
मण्डलोपरि पात्रेषु नैवेद्यं परिवेषयेत् ॥ १३७४ ॥

अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम् ।
शाखादि पुरतः स्थाप्यं भक्ष्यभोज्ये च वामतः ॥ १३७५ ॥

पात्राभिघारपूर्वं तु लवणं सन्धिलानि च ।
पायसं परिवेष्याथ ह्यन्नादि परिवेषयेत् ॥ १३७६ ॥

सम्प्रोक्ष्य तीर्थतोयेन निधाय तुलसीदलम् ।
स्मरन् विष्णुं त्यजेदन्नं भूसुरेभ्यो विधानतः ॥ १३७७ ॥

(वैष्णवेभ्यः कृतं दानमक्षयफलकम्)

वैष्णवेभ्यः कृतं दानं स्वर्गमोक्षाय वै भवेत् ।
विष्णुभक्तिविहीनेभ्यो नरकाय तमोन्धसे ॥ १३७८ ॥

वैष्णवाय सुतत्वाय स्वाद्वन्नं गुणवत्तरम् ।
ददाति मनुजो यस्तु तृप्यन्ति सकलाः सुराः ॥ १३७९ ॥

विष्णुर्यज्ञपतिः साक्षादन्तर्यामी पतिः श्रियः ।
सारं भुनक्ति भूतात्मा तच्छेषं प्राणनायकः ॥ १३८० ॥

वाग्देवी तदनुज्ञाता द्विजशेषशिवादयः[९६] ।
भुञ्जन्त्यनु च एवैताः तत्स्त्रियः परमादरात् ॥ १३८१ ॥

सौपर्णी वारुणी चाथ भवानी भर्तुराज्ञया ।
इन्द्रकामौ ततः पश्चाद् ये ज्ञानेन्द्रियनियामकाः ॥ १३८२ ॥

कर्मेन्द्रियाधिपाः सर्वे मनोबुद्ध्यहमात्मिकाः ।
चिन्तनीया मतास्सर्वे ऋषयः पितृपूर्वकाः ।
इत्यादि सकलास्तृप्तिं प्राप्नुयुः पुण्यदायकाः ॥ १३८३ ॥

**(पापिनां मिथ्याज्ञानिनां च दाने नरकप्राप्तिरेव दातुः)**

पापिष्ठाय कुशीलाय मिथ्याज्ञानरताय च ।
नास्तिकाय कृतघ्नाय विष्णुसामान्यदर्शिने ॥ १३८४ ॥

तस्मै दत्तं शुभं चान्नं गोभूस्वर्णादिसम्भृतम् ।
तत्सर्वं पापमूलं हि दाता गच्छति नारकम् ।
कलिस्तु तत्र भोक्ता वै मिथ्याज्ञानस्वरूपधृक् ॥ १३८५ ॥

ज्ञानेन्द्रियाणां दैतेयाः राक्षसाः कर्मणः स्मृताः ।
मृत्युर्मनोगतो यत्र बुद्धिर्मिथ्यात्मिका कलेः ॥ १३८६ ॥

---

९६. द्विजादयः

जाया चित्तगता नास्तीह्यहङ्कारस्य नायकी ।
असारभुक् च जिह्वायां मत्तश्चक्षुर्नियामकः ॥ १३८७ ॥

दुर्गन्धोऽथापि घ्राणे तु श्रवणे कलिरास्थितः ।
विषाभिमानी स्पर्शे हि हिंसकाः पाणिमध्यगाः ॥ १३८८ ॥

दुर्दारगामिनः पादौ वाचि कुत्सितभाषिणः ।
मिथ्याभिमानी गुह्ये हि अपाने मृत्युरेव हि ॥ १३८९ ॥

कुक्षौ दावानले वह्निः सर्वदेहेषु पापिनः ।
इत्यादिसर्वनारक्या यातनाधिकनायकाः ॥ १३९० ॥

तृप्यन्ति सततं तत्र जनानां दानकारिणाम् ।
तस्मात्तत्र प्रवृत्तानां नरकेषु सदा स्थितिः ॥ १३९१ ॥

इति लक्ष्मीसंहितायाम् ॥

(गोग्रासः प्रदेयः)

अन्नं दत्वाऽथ विप्रेभ्यो दद्याद् गोग्रासमञ्जसा ।
सुरभि वैष्णवी मातः नित्यं विष्णुपदस्थिते ।
गोग्रासं तु मया दत्तं सुरभि प्रतिगृह्यताम् ॥ १३९२ ॥

(गोसावित्रीस्तोत्रं पठनीयम्)

गोसावित्रीं प्रवक्ष्यामि व्यासेन कथितं पुरा ।
गवां स्तोत्रमिदं पुण्यं सर्वपापप्रणाशनम् ॥ १३९३ ॥

गोभिर्निश्वसिता वेदाः सषडङ्गपदक्रमाः ।
एतासामग्रशृङ्गेषु महाविष्णुः स्वयं स्थितः ॥ १३९४ ॥

शिरोब्रह्म पुरःस्कन्धे ललाटे वृषभध्वजः ।
कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ ॥ १३९५ ॥

कण्ठे च वरुणो राजा हृदये हव्यवाहनः ।
उदरे पृथिवी देवी सशैलवनकानना ॥ १३९६ ॥

नाभ्यां स्थितं ह्यन्तरिक्षं नद्यः सर्वाङ्गसन्धिषु ।
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम् ॥ १३९७ ॥

इष्टपुष्टिमहालक्ष्मी गोमये संस्थिता सदा ।
नासिकायां महादेवी ज्येष्ठा वसति भाविनी ॥ १३९८ ॥

चत्वारः सागराः पूर्णाः गवां यान्ति पयोधरान् ।
करमध्येषु गन्धर्वाः कराग्रेषु च पन्नगाः ॥ १३९९ ॥

खुरायां पश्चिमाग्रेषु अप्सराणां गणाः स्मृताः ।?
श्रोणीतटस्थाः पितरो धना लाङ्गूलमाश्रिताः ॥ १४०० ॥

ऋषयो रोमकूपेषु चर्मण्येव प्रजापतिः ॥
सर्वदेवमया गावः तासां [९७]गोप्ता च केशवः ॥ १४०१ ॥

य इदं पठते नित्यं महापातकनाशनम् ।
ब्राह्मणो लभते विद्यां क्षत्रियो राज्यमश्नुते ॥ १४०२ ॥

वैश्यस्तु लाभमाप्नोति शूद्रः पापात् प्रमुच्यते ।
गर्भिणी जनयेत्पुत्रान् कन्या भर्तारमाप्नुयात् ॥ १४०३ ॥

---

९७. गात्या

सायं प्रातः पठेन्नित्यं समस्ताभीष्टसिद्धये ।
अहोरात्रैः कृतैः पापैः पठनादेव मुच्यते ॥ १४०४ ॥

॥ इति गोसावित्रीस्तोत्रं सम्पूर्णम् ॥

(भोजनक्रमः)

गोग्रासं तु ततो दत्वा पुत्रमित्रादिसंयुतः ।
तीर्थप्रदानपूर्वं तु स्वयं भोजनमाचरेत् ॥ १४०५ ॥

परिषेचनमह्नः कुर्यात् 'सत्यं त्वर्तेन' मन्त्रतः ।
रात्रौ 'ऋतं त्वा सत्येन' कुर्यात् परिषेचनं बुधः ॥ १४०६ ॥

परिषेचनमारभ्य प्रादक्षिण्येन वै क्रमात् ।
अप्रदक्षिणचित्रान्नममेध्यं मनुरब्रवीत् ॥ १४०७ ॥

चित्राय चित्रगुप्ताय धर्मराजाय वै बलिम् ।
भूतेभ्यश्च ततो दत्वा हस्तं प्रक्षालयेद् द्विजः ॥ १४०८ ॥

चित्राहुतीरनुद्धृत्य भुङ्क्ते यो ग्रासपञ्चकम् ।
मांसं स केवलं भुङ्क्ते ज्ञानतोऽज्ञानतोऽपि वा ॥ १४०९ ॥

श्राद्धभुङ् न बलिं दद्यात् बलिहीनं न भोजयेत् ।
अद्भिरेव प्रकुर्वीत श्राद्धे बलिविनिर्णयः ॥ १४१० ॥

चित्राय चित्रगुप्ताय सर्वभूताय वै बलिम् ।
भुवोपरि न दातव्यं पृथक्पात्रे तु निक्षिपेत् ॥ १४११ ॥

बलिं दृष्ट्वा तु यो भुङ्क्ते स मलाशी न संशयः ।
तस्मात्सर्वप्रयत्नेन 'यमसूक्तं' तदा स्मरेत् ॥ १४१२ ॥

'यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निर्दूतो अलङ्कृतः' इति । ॥ १४१३ ॥

आपोशनं च स्नानं च तैलाभ्यङ्गं च मण्डलम् ।
यस्तु मोहात्स्वयं कुर्याज्ज्येष्ठपुत्रो विनश्यति ॥ १४१४ ॥

आपोशनं करे धृत्वा पात्रे धृत्वा तिलोदकम् ।
श्वानमूत्रसमं तोयं पुनः पूरयते यदि ॥ १४१५ ॥

आपोशनार्थं यत्तोयं करस्थं स्रवणं यदि ।
हस्तं प्रक्षाल्य तोयेन पुनः सन्धारयेज्जलम् ॥ १४१६ ॥

आपोशनं च कुरुते तीर्थेन कमलोद्भव ।
कोटिचान्द्रायणं पुण्यं फलं प्राप्नोत्यसंशयः ॥ १४१७ ॥

**(भोजनारम्भे पठनीयाः श्लोकाः)**

'इन्द्रियेभ्यः परा ह्यर्था' इति मन्त्रं पठेत् नरः ।
'सङ्कर्षणश्च प्रद्युम्नः तत्र भोक्तृषु संस्थितौ' ॥ १४१८ ॥

भोक्तृशक्तिप्रदातारौ भोक्तारौ तु विशेषतः ।
नारायणानिरुद्धौ तु भोज्यवस्तुषु संस्थितौ ॥ १४१९ ॥

तर्पकः सर्वजीवानां तस्माद्भोज्यो न चर्वितः ।
अवकाशप्रदो नित्यं वासुदेवो नभस्थितः
एवं पञ्चात्मको विष्णुरेवमास्ते सदैव हि' ॥ १४२० ॥

'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि' ॥ १४२१ ॥

नैवेद्यशेषं तुलसीविमिश्रितं
विशेषतः पादजलेन सिक्तम्।
योऽश्नाति नित्यं पुरतो मुरारेः
प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ १४२२ ॥

एवं सञ्चिन्त्य मनसा कुर्यादापोशनं बुधः।
ब्राह्मणेभ्यो ह्यनुज्ञातः पञ्च प्राणाहुतीश्चरेत् ॥ १४२३ ॥

(प्राणाग्निहोत्रविधिः)

प्राणाग्निहोत्रविधिना घृतहीनं न कारयेत्।
घृतहीनं तु यो भुङ्क्ते नरः स्वाहेति पञ्चकम्।
पश्चात् घृतेन यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥ १४२४ ॥

प्राणाहुतीनां समये हस्ताग्राादाज्यसेचनम्।
तदन्नं मांसतुल्यं तु तद्घृतं रुधिरं भवेत् ॥ १४२५ ॥

यदन्नं सूपसंयुक्तं प्राणाद्याहुतिमाचरेत्।
तदन्नं क्रिमिसंयुक्तं तुल्यं गोमांसभक्षणम् ॥ १४२६ ॥

प्राणाहुतीरहुत्वा तु यश्चान्नं परिमर्दयेत्।
मर्दितं भोजयेद् यस्तु भुक्त्वा चान्द्रायणं चरेत् ॥ १४२७ ॥

मधुपर्के च होमे च ह्यप्सु प्राणाहुतिष्वपि।
अन्नहोमेषु सर्वेषु नोच्छिष्टं मनुरब्रवीत् ॥ १४२८ ॥

अन्नं दन्तैर्न चाश्नीयात् यावत्तोयं न वै पिबेत्।
अपीत्वा यदि भुञ्जीत तुल्यं गोमांसभक्षणात् ॥ १४२९ ॥

(भोजने जलप्राशनक्रमः)

दक्षिणं तु परित्यज्य वामे नीरं न दापयेत् ।
अभोज्यं तद्भवेदन्नं पानीयं सुरया समम् ॥ १४३० ॥

जलपात्रं तु निक्षिप्य मणिबन्धे च दक्षिणे ।
भुक्तिकाले च विप्रो वै पिबेदन्येन पाणिना ॥ १४३१ ॥

ओदने परमान्ने च आज्यपात्रं न निक्षिपेत् ।
यदि वा निक्षिपेद् यस्तु तद् घृतं सुरया समम् ॥ १४३२ ॥

एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ १४३३ ॥

(पङ्क्तिदोषः परिहरणीयः)

अग्निना भस्मना चैव स्तम्भेन सलिलेन वा ।
अन्तरं द्वारदेशेषु पङ्क्तिदोषो न विद्यते ॥ १४३४ ॥

(दीपसत्व एव भोजनम्)

नराणां भोजने काले यदि दीपो विनश्यति ।
पाणिभ्यां पात्रमादाय भास्करं मनसा स्मरेत् ॥ १४३५ ॥

पुनर्दीपं तु प्रज्वाल्य तच्छेषं भोजयेन्नरः ।
पुनरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ १४३६ ॥

भोज्ये शतकणान्नं च [९८]त्यजेदुच्छिष्टभोजने ।
न त्यजेत् यदि मूढात्मा रौरवं नरकं व्रजेत् ।
सर्वं सशेषमश्नीयात् विना तु घृतपायसे ॥ १४३७ ॥

९८. त्यजेदधिष्ठ

(उच्छिष्टपिण्डप्रदानम्)

उच्छिष्टपिण्डमादाय आघ्राय स्वरपूर्वकम् ।
दुर्गतीनां मया दत्तम् अक्षय्यमुपतिष्ठतु ॥ १४३८ ॥

केचिदूताः काम्यमानाः केचित् कर्मवशानुगाः ।
भुञ्जीत मामकोच्छिष्टं ह्यक्षय्यमुपतिष्ठतु ।
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
दुर्गतीनां मया दत्तं ह्यक्षय्यमुपतिष्ठतु ॥ १४३९ ॥

रौरवे नरके घोरे वसतां क्षुत्पिपासया ।
तेषामन्नोदकं दत्तं ह्यक्षय्यमुपतिष्ठतु ॥ १४४० ॥

अर्धं पिबति गण्डूषम् अर्धं त्यजति भूमिषु ।
प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः ॥ १४४१ ॥

उत्तरापोशनं पीत्वा वामभागे विनिक्षिपेत् ।
तर्जनीमध्यमामध्यं रौरवं चोदकं त्यजेत् ॥ १४४२ ॥

पात्रे तु निक्षिपेद्यस्तु स विप्रः पङ्क्तिदूषकः ।
पवित्रग्रन्थिमुत्सृज्य निक्षिपेद्भूमिमण्डले ॥ १४४३ ॥

[९९]ब्रह्मोदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥ १४४४ ॥

उत्तरापोशनं पीत्वा पात्रं स्पृशति यो नरः ।
समुद्रगां नदीं गत्वा सचेलस्नानमाचरेत् ॥ १४४५ ॥

---

९९. ब्रह्म दाने

(भोजने नियमाः)

एकपङ्क्त्युपविष्टानामन्योन्यं स्पृशते यदि ।
तदन्नमत्यजन् भुङ्क्त्वा गायत्र्यष्टशतं जपेत् ॥ १४४६ ॥

उच्छिष्टोच्छिष्टसंस्पर्शे शुना शूद्रेण वा द्विजः ।
तद्दिने चोपवासश्च पञ्चगव्येन शुद्ध्यति ॥ १४४७ ॥

द्विजानां भोजने पात्रे उच्छिष्टं पतते यदि ।
तदन्नं नैव भोक्तव्यं नोत्तरापोशनं चरेत् ॥ १४४८ ॥

तक्रं तैलं तथा दुग्धं गोघृतं लवणं तथा ।
हस्तदत्तं तु यो भुङ्क्ते तुल्यं गोमांसभक्षणात् ॥ १४४९ ॥

स्वर्णे रौप्यमये पात्रे भुञ्जीयात् सर्वदा बुधः ।
एकेनैव तु भोक्तव्यं न चापि परभाजने ॥ १४५० ॥

परभाजने न भोक्तव्यं कांस्ये वा रौप्य एव वा ।
यदि भुञ्जीत सततं नरो भवति किल्बिषी ॥ १४५१ ॥

स्वर्णे रौप्यमये पात्रे भुञ्जते हि यदाऽसकृत् ।
तदन्नं सर्वमुच्छिष्टं नरो याति च दुर्गतिम् ॥ १४५२ ॥

निशि काले तु सम्प्राप्ते मण्डलं कारयेद् द्विजः ।
ग्रासमेकं यतो भुङ्क्ते अमेध्यं मनुरब्रवीत् ॥ १४५३ ॥

विष्णुदीक्षाविहीनस्य विप्रस्य करसम्भवम् ।
यो भुङ्क्ते तीर्थराजे वै स भुङ्क्ते पापसम्भवम् ॥ १४५४ ॥

वैष्णवस्य गृहे यस्तु भुङ्क्ते विष्णुपदार्पितम् ।
स पुण्यसागरो ज्ञेयो भुङ्क्ते पुण्यार्णवं शुभम् ॥ १४५५ ॥

(परान्नं न भोक्तव्यम्)

सेतुप्रयागमाहात्म्ये -

परपाकं परान्नं वा यो भुङ्क्ते सततं द्विजः ।
स पापी नारकी ज्ञेयः सर्वमन्त्रबहिष्कृतः ॥ १४५६ ॥

परान्ने यदि सम्प्राप्ते हरिपादोदपावितम् ।
अन्यस्पृष्टं पुनर्न स्याद्भुञ्जीयाद् ब्राह्मणः शुचिः ॥ १४५७ ॥

हरेर्निवेदितं त्वग्नौ हुतशेषान्नमादरात् ।
द्वादशाक्षरमन्त्रेण पूतं भुङ्क्ते स मे प्रियः ॥ १४५८ ॥

[१००]पूर्वापोशनतः पूर्वं भाजने परिवेषितम् ।
हरिपादोदपूतान्नं नान्यस्पृष्टं व्रजेद् द्विजः ॥ १४५९ ॥

एवं नियमकृद्विप्रे मनवः स्युरभीष्टदाः ॥
तस्माद् ब्राह्मण्यरक्षार्थं जागरूको भवेद् द्विजः ॥ १४६० ॥

इति वाराहे ।

(अवैष्णवान्नं परान्नमुच्यते)

वैष्णवान्नमनुप्राप्तं परान्नमिति ये विदुः ।
पूर्वजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥ १४६१ ॥

नारी पुरुषभेदेन पात्रभेदेन मस्करी ।
गृहस्थः पाकभेदेन रौरवं नरकं व्रजेत् ॥ १४६२ ॥

---

१००. पूर्वे पाशनतः

भोजने स्नानकालेषु विद्याद्यारम्भणेषु च ।
विप्राज्ञया भोजनाद्यं कुर्याद्विप्रो विचक्षणः ॥ १४६३ ॥

इति पाद्मे ।

हरिपादोदपूतान्नं* गुर्वनुज्ञामुपागतः ।
यो भुङ्क्ते सततं विष्णोः पुरतः स द्विजोत्तमः ॥ १४६४ ॥

अन्यथा राक्षसाद्यैस्तु दूषितं प्राह केशवः ।
तस्माद् गुरुप्रसादेन लब्धस्तत्तत्समाचरेत् ॥ १४६५ ॥

इति च पाद्मे ।

**(विशिष्टदेवालयेषु स्वयं व्यक्तस्थले च स्पृष्टास्पृष्टिदोषो न विद्यते)**

श्वेतवराहे श्रीरङ्गे श्वेताद्रौ वेङ्कटाचले ।
अनन्तशयने शार्ङ्गपाणौ काञ्च्यां तथैव च ॥ १४६६ ॥

अहोबले च सिंहाद्रौ तथा वै काकुलेश्वरे ।
धर्मपुर्यां पाण्डुरङ्गे जगन्नाथे च सुन्दरे ॥ १४६७ ॥

सालिग्रामशिलायां च द्वारवत्यां सुरोत्तम ।
नरनारायणे चैव स्वयं व्यक्तस्थलेष्वपि ॥ १४६८ ॥

कुर्यात् पाषण्डभूयिष्ठां प्रत्ययार्थं सुरद्विषाम् ।
उर्व्यां पाषण्डभूयिष्ठाः दर्वीभूता वसन्ति वै ॥ १४६९ ॥

पङ्क्तिदेवी महालक्ष्मी भोक्ता देवो जनार्दनः ।
परिचारका वसन्त्येते देवा ब्रह्मादिका अपि ॥ १४७० ॥

---

* पूतानां

तस्मादेतेषु स्थानेषु नैवेद्यं न च दुष्यति ।
चण्डालस्यापि संस्पर्शे दूरदेशादुपागते ।
अन्नाद्यं नैव दुष्टं स्यात् मधुसूदनशासनात् ॥ १४७१ ॥

तीर्थनिर्माल्यपक्वान्नं पूर्वं यद्धरिसेवितम् ।
वेङ्कटाचलपूर्वे तु स्वयं व्यक्ते न दुष्यते ॥ १४७२ ॥

तदर्पितान्नशेषेण पितुः श्राद्धं करोति चेत् ।
पितामहाद्यैः सन्तुष्टो नदन् याति हरेः पदम् ॥ १४७३ ॥

तदर्पितान्नशेषेण न कुर्याद् यदि पैतृकम् ।
स्वर्गस्थैः पितृभिः सार्धं रौरवं नरकं व्रजेत् ॥ १४७४ ॥

पाषण्डिभिरपि स्पष्टम् अन्नाद्यं नैव दूष्यते ।
यथा बहुगुणं ह्यन्नं श्वानस्पृष्टं न दूष्यति ।
तद्भोज्यं शिरसा धार्यं निर्माल्यमिव सादरम् ॥ १४७५ ॥

इति पञ्चरात्रे ।

**(कदा न भोक्तव्यम् ?)**

भरद्वाजसहितायाम् -

एकादश्यां च यच्चान्नं यच्चान्नं राहुदर्शने ।
जातकं मृतकं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ १४७६ ॥

स्त्रीशेषशूद्रशेषं च तथा वै केशदूषितम् ।
पितृशेषं च भुक्त्वा तु रौरवं नरकं व्रजेत् ॥ १४७७ ॥

ब्रह्मोदनं च चौलान्नं अन्नं चैवाष्टवर्गिकम् ।
मासिकान्नं पैतृकं च भुक्त्वा चान्द्रायणं चरेत् ॥ १४७८ ॥

सांवत्सरविमोकान्नं सपिण्डीकरणं तथा ।
जातकं मृतकं चैव नरो भवति पातकी ॥ १४७९ ॥

यो मोहाद् बालकैः सार्धं भार्यया सह भोजनम् ।
कुर्याद्यदि विमूढात्मा स भवेत्पातकी नरः ॥ १४८० ॥

मार्जालमर्कटाद्यैश्च दूषितं जन्तुभिस्तथा ॥
यो भुङ्क्तेऽन्नादिकं लोभात् स नरः किल्बिषी भवेत् ॥१४८१॥

चण्डालपतितव्रात्यशूद्राद्यैर्दृष्टिदूषितम् ।
हरेरनर्पितान्नं च भुक्त्वा चान्द्रायणं चरेत् ॥ १४८२ ॥

एवमादिनिषिद्धान्नं परित्यज्य परेशितुः ।
भुक्तशेषं भगवतो भुक्त्वा तद्गतमानसः ॥ १४८३ ॥

प्रक्षाल्य पाणिपादौ च कुर्याद् गण्डूषमञ्जसा ।

**(अङ्गुष्ठाग्राम्बुभिः अक्षिणी प्रक्षालयेत्)**

प्रक्षालयेदक्षणी स्वे ह्यङ्गुष्ठाग्राम्बुभिर्द्विजः ॥ १४८४ ॥

दुरन्नं दुष्कृतं चैव पतितान्नं च भोजनम् ।
तद्दोषपरिहारार्थम् अङ्गुष्ठाग्राम्बु निक्षिपेत् ॥ १४८५ ॥

शर्यातिं च सुकन्यां च च्यवनं चेन्द्रमश्विनौ ।
भोजनान्ते स्मरन्नक्ष्णोरङ्गुष्ठाग्राम्बु निक्षिपेत् ॥ १४८६ ॥

आचम्य मूलमन्त्रेण कोष्ठं स्वमभिमन्त्रयेत् ।
भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदुङ्मुखोऽपि वा ॥ १४८७ ॥

यथावत्पुनराचमेत् पाणी प्रक्षाल्य मूलतः ।
स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ॥ १४८८ ॥

(भुक्त्वाऽभीष्टदेवता स्मर्तव्या)

अभीष्टदेवतानां च कुर्वीत स्मरणं नरः ।
अग्निराप्याययन् धातुं पार्थिवं पचनेरितः ॥ १४८९ ॥

दत्तावकाशो नभसा जरयत्वस्तु मे सुखम् ।
अन्नं बालाय मे भूमेरपामग्न्यनिलस्य च ॥ १४९० ॥

भवत्वेतत् परिणतं ममास्त्वव्याहतं सुखम् ।
प्राणापानसमानानाम् उदानव्यानयोरथ ।
अन्नं पुष्टिकरं धातु ममास्त्वव्याहतं सुखम् ॥ १४९१ ॥

अगस्त्याग्निर्बडवानलश्च
भुक्तं मयान्नं जरयेदशेषम् ।
सुखं च मे तत्परिणामसम्भवं
यच्छत्वरोगं मम चास्तु देहे ॥ १४९२ ॥

विष्णुः समस्तेन्द्रियदेहदेहि-
प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमात्रं
निरोग्यत्वं परिणाममेतु ॥ १४९३ ॥

विष्णुर्भोक्ता तथैवान्नं परिणामश्च वै तथा ।
सत्येन तेन मद्भुक्तं जीर्यत्वन्नमशेषतः ॥ १४९४ ॥

इत्युच्चार्य स्वहस्तेन परिमार्जेत्तथोत्तरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥ १४९५ ॥
इति विष्णुपुराणे।

(ताम्बूलसेवनक्रमः)

अस्फोटितं च यत्पूगम् अप्रक्षालितपत्रकम् ।
अशोधितं च यच्चूर्णं शक्रस्यापि श्रियं हरेत् ॥ १४९६ ॥

अनिधाय मुखे पर्णं पूगं खादति यो नरः ।
सप्तजन्मदरिद्रत्वमश्नुते न स्मरेद् हरिम् ॥ १४९७ ॥

(प्रातरारभ्य सर्वकर्मसु ध्येयविष्णुरूपाणि)

प्रातर्नारायणं स्मृत्वा तुलसीकृष्णवन्दनम् ।
शौचकाले केशवं तु मृदा शौचे त्रिविक्रमम् ॥ १४९८ ॥

दन्तधावनकाले तु हरिर्ध्येयो भुजाष्टकः ।
मुखप्रक्षालने काले माधवं मनसा स्मरेत् ॥ १४९९ ॥

गवां कण्डूयने काले स्मरेद्गोवर्धनं हरिम् ।
गवां दोहनकाले तु गोपालस्वामिनं स्मरेत् ॥ १५०० ॥

अर्भकानां बालकृष्णं स्तन्यदाने तु संस्मरेत् ।
दधिमन्थे तु मन्थानं धृतं कृष्णं तु संस्मरेत् ॥ १५०१ ॥

वराहं मृत्तिकास्नाने उपेन्द्रं वस्त्रधारणे ।
अनार्द्रकरणे वस्त्राणां वासुदेवं सदा स्मरेत् ॥ १५०२ ॥

पुण्ड्राणां धारणे काले केशवादीन् स्मरेत् सुधीः ।
मुद्राणां धारणे काले कृद्धोल्कादीन् स्मरेत् सुधीः ॥ १५०३ ॥

पूर्वोत्तरापोशनयोः वायोरन्तर्गतं हरिम् ।
उपवीते धार्यमाणे वामनं जामदग्निकम् ॥ १५०४ ॥

पादजङ्घेष्वपि तथा होमकाले च संस्मरेत् ।
[101]आरार्तिग्रहणे काले परशुरामं च संस्मरेत् ॥ १५०५ ॥

कृष्णरामौ वासुदेवं तीर्थपात्रे च संस्मरेत् ।
शङ्खोदकस्य ग्रहणे मुकुन्दं संस्मरेत्सुधीः ॥ १५०६ ॥

गोविन्दं भोजने काले भक्ष्यकालेऽच्युतं तथा ।
धन्वन्तरिं शाककाले संस्मरेद् ज्ञानपूर्वकम् ॥ १५०७ ॥

परमान्ने गृह्यमाणे पाण्डुरङ्गं च संस्मरेत् ।
तैलभक्षे वेङ्कटेशं स्मरेत्तग्दं सनातनम् ॥ १५०८ ॥

बालकृष्णं तूदपाने गङ्गापाने त्रिविक्रमम् ।
क्षीरपाने श्रीनिवासं फलादीनां च भक्षणे ॥ १५०९ ॥

नृसिंहं पानके मार्गे वैनतेयगतं हरिम् ।
वेणुनादप्रियं कृष्णं पुत्रचुम्बनकालके ॥ १५१० ॥

स्वस्त्रीभोगेषु लक्ष्म्यादिगोपीनारीपतिं स्मरेत् ।
सङ्कर्षणं तु शय्यायां ताम्बूलेऽप्यनिरुद्धकम् ॥ १५११ ॥

निद्राकाले पद्मनाभं स्मरेत्पद्मापतिं स्मरेत् ।
व्यासरूपं हयग्रीवं कथाकाले च संस्मरेत् ॥ १५१२ ॥

---

१०१. अरातिग्रहणे

इत्युच्चार्य स्वहस्तेन परिमार्जेत्तथोत्तरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥ १४९५ ॥
इति विष्णुपुराणे।

(ताम्बूलसेवनक्रमः)

अस्फोटितं च यत्पूगम् अप्रक्षालितपत्रकम् ।
अशोधितं च यच्चूर्णं शक्रस्यापि श्रियं हरेत् ॥ १४९६ ॥

अनिधाय मुखे पर्णं पूगं खादति यो नरः ।
सप्तजन्मदरिद्रत्वमश्नुते न स्मरेद् हरिम् ॥ १४९७ ॥

(प्रातरारभ्य सर्वकर्मसु ध्येयविष्णुरूपाणि)

प्रातर्नारायणं स्मृत्वा तुलसीकृष्णवन्दनम् ।
शौचकाले केशवं तु मृदा शौचे त्रिविक्रमम् ॥ १४९८ ॥

दन्तधावनकाले तु हरिर्ध्येयो भुजाष्टकः ।
मुखप्रक्षालने काले माधवं मनसा स्मरेत् ॥ १४९९ ॥

गवां कण्डूयने काले स्मरेद्गोवर्धनं हरिम् ।
गवां दोहनकाले तु गोपालस्वामिनं स्मरेत् ॥ १५०० ॥

अर्भकानां बालकृष्णं स्तन्यदाने तु संस्मरेत् ।
दधिमन्थे तु मन्थानं धृतं कृष्णं तु संस्मरेत् ॥ १५०१ ॥

वराहं मृत्तिकास्नाने उपेन्द्रं वस्त्रधारणे ।
अनार्द्रकरणे वस्त्राणां वासुदेवं सदा स्मरेत् ॥ १५०२ ॥

पुण्ड्राणां धारणे काले केशवादीन् स्मरेत् सुधीः ।
मुद्राणां धारणे काले कृद्धोल्कादीन् स्मरेत् सुधीः ॥ १५०३ ॥

पूर्वोत्तरापोशनयोः वायोरन्तर्गतं हरिम् ।
उपवीते धार्यमाणे वामनं जामदग्निकम् ॥ १५०४ ॥

पादजङ्घेष्वपि तथा होमकाले च संस्मरेत् ।
[१०१]आरार्तिग्रहणे काले परशुरामं च संस्मरेत् ॥ १५०५ ॥

कृष्णरामौ वासुदेवं तीर्थपात्रे च संस्मरेत् ।
शङ्खोदकस्य ग्रहणे मुकुन्दं संस्मरेत्सुधीः ॥ १५०६ ॥

गोविन्दं भोजने काले भक्ष्यकालेऽच्युतं तथा ।
धन्वन्तरिं शाककाले संस्मरेद् ज्ञानपूर्वकम् ॥ १५०७ ॥

परमान्ने गृह्यमाणे पाण्डुरङ्गं च संस्मरेत् ।
तैलभक्षे वेङ्कटेशं स्मरेत्तग्दं सनातनम् ॥ १५०८ ॥

बालकृष्णं तूदपाने गङ्गापाने त्रिविक्रमम् ।
क्षीरपाने श्रीनिवासं फलादीनां च भक्षणे ॥ १५०९ ॥

नृसिंहं पानके मार्गे वैनतेयगतं हरिम् ।
वेणुनादप्रियं कृष्णं पुत्रचुम्बनकालके ॥ १५१० ॥

स्वस्त्रीभोगेषु लक्ष्म्यादिगोपीनारीपतिं स्मरेत् ।
सङ्कर्षणं तु शय्यायां ताम्बूलेऽप्यनिरुद्धकम् ॥ १५११ ॥

निद्राकाले पद्मनाभं स्मरेत्पद्मापतिं स्मरेत् ।
व्यासरूपं हयग्रीवं कथाकाले च संस्मरेत् ॥ १५१२ ॥

---

१०१. अरातिग्रहणे

नारायणं शेषशायिं दक्षिणात्यागकालके ।
तुलसीदलच्छेदने तु स्मरेद्दाशरथिं हरिम् ? ॥ १५१३ ॥

पत्रच्छेदनकाले तु विष्णुं कृष्णं च तं स्मरेत् ।
नारायणः शेषशायी परिवारयुतः सदा ॥ १५१४ ॥

नमस्कारे च विज्ञेयः नमस्कारप्रवर्तकः ॥
प्रदक्षिणे गरुत्मस्थं स्मरेन्नारायणं हरिम् ॥ १५१५ ॥

भीतिकाले नारसिंहं स्मरेद्भवभयं हरिम् ।
उदरपूर्तौ वासुदेवं फलाहारे तथैव च ॥ १५१६ ॥

पञ्च प्राणाहुतिष्वेषु ह्यनिरुद्धादिरूपिणम् ।
सन्ध्यायां रामचन्द्रं च प्रियकर्माभिमानिनम् ॥ १५१७ ॥

पुष्करं संस्मरेद् बुद्ध्या कर्मपूर्तिप्रदायकम् ।
बालरूपं कृष्णदेवं बालकेषु प्रचिन्तयेत् ॥ १५१८ ॥

पुत्रेषु केशवं देवं माधवं स्त्रीषु संस्मरेत् ।
पुत्रिकायां वासुदेवं माधवं पौत्रसंस्थितम् ॥ १५१९ ॥

नारायणो ब्राह्मणेषु शालके त्वनिरुद्धकः ।
गोषु स्थितो विष्णुरूपी वैश्ये प्रद्युम्नरूपकः ॥ १५२० ॥

शूद्रे सङ्कर्षणः प्रोक्तः सेवके महिदासकः ।
अनन्तमूर्तिमन्यत्र पदार्थेषु विचिन्तयेत् ॥ १५२१ ॥

एवमादिपदार्थेषु तत्तद्रूपेण संस्थितम् ।
हरिं ज्ञात्वा तु मुच्यन्ते नरा हत्यादिकिल्बिषैः ॥ १५२२ ॥

इत्यादि गारुडे ।

स्मृत्वैवं परमात्मानं कायेनेति समर्पयेत् ।
सर्वकर्म तथोत्कर्षं जानीयादिन्दिरेशितुः ॥ १५२३ ॥

(सदाचारस्मृतिः)

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १८ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १९ ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ २० ॥

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ॥ २१ ॥

इति गुह्यतमं शास्त्रम् इदमुक्तं मयानघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २२ ॥

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ॥ २३ ॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ २४ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ २५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुरः ॥ २६ ॥

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युः एतयोरेव किङ्कराः ॥ २७ ॥

धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ।
पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरे ॥ २८ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
नित्यं भवेच्च मन्निष्ठो बुभूषुः पुरुषस्तथा ॥ २९ ॥

एष नित्यः सदाचारो गृहिणो वनिनस्तथा ।
वैश्वदेवं बलिं दन्तधावनं चाप्यृते वटोः ॥ ३० ॥

एवमेव यतेः स्वीयवित्तेन तु विना सदा ।
मूलमन्त्रैः सदा स्नानं विष्णोरेव च तर्पणम् ॥ ३१ ॥

विशेषो निष्क्रियतेरजलाञ्जलिता तथा ।
तर्पणं तु हरेरेव हरेरन्यस्य चोदितम् ।
समिद्धोमो वटोश्चैव स्मृत्वा विष्णुं हुताशने ॥ ३२ ॥

सर्ववर्णाश्रमैर्विष्णुः एक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य परिवारतयैव तु ॥ ३३ ॥

कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद् यः ।
सर्वस्य धातारमचिन्त्यरूपम्
आदित्यवर्णं तमसः परस्तात् ॥ ३४ ॥

वेदाहमेतं पुरुषं महान्तम्
आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरो
नामानि कृत्वा अभिवदन् यदास्ते ॥ ३५ ॥

धाता पुरस्ताद् यमुदाजहार
शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते ॥ ३६ ॥

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः ।
सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ॥ ३७ ॥

अशेषकल्याणगुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रीयतां पुरुषोत्तमः ॥ ३८ ॥

द्वाविमाविति यत्प्रोक्तं विद्याधीशेन चाञ्जसा ।
ब्रह्मा शिवस्सुरेशाद्याः शरीरक्षरणात् क्षराः ॥ १५२४ ॥

लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ।
ज्ञातुरेवं फलं प्रोक्तं कृष्णेनैव तु सादरम् ॥ १५२५ ॥

यो मामिति ततस्तेन तद्गोप्यत्वादुदीरितम् ।
रुद्रं समाश्रिता देवाः इत्यप्याहोच्चतां हरेः ॥ १५२६ ॥

ये मे मतमिति प्रोक्तं फलं तदनुतिष्ठताम् ।
ये त्वेतदभ्यसूयन्त इत्यन्येषां च यत्फलम् ॥ १५२७ ॥

तच्चोक्तं भूतसर्गौ च द्वावेवेति प्रकीर्तितौ ।
द्वौ भूतसर्गावित्यादिस्तस्माद्भक्तिः परा मता ॥ १५२८ ॥

भक्तिश्च विष्णोरुत्कर्षज्ञानमेव न चान्यथा ।
तस्मात्तत्स्मरणं कार्यं न कदाचित्तु विस्मरेत् ॥ १५२९ ॥

स्मर्तव्यः सततं विष्णुरित्याद्यैरुक्तमेव तत् ।
भक्तेरुक्तर्षमेवाह विद्याधीशो जगद्गुरुः ॥ १५३० ॥

धर्मो भवत्यधर्मोऽपीत्यादिकैः सोपपत्तिकम् ।
मन्मना भव मद्भक्तो इति प्राह सतां पतिः ॥ १५३१ ॥

फलितं च स्वभक्ताय तस्मात्पूज्यो हरिः सदा ।
एष नित्य इति ह्याह गुरूराश्रमिणां तथा ॥ १५३२ ॥

सदाचारं यथाकार्यं विष्णोरेकस्य चेज्यताम् ।
सर्वैरपि सुराणां तु परिवारतयेज्यताम् ॥ १५३३ ॥

सर्ववर्णाश्रमैः विष्णुरित्याद्यैर्वक्ति सद्गुरुः ।
कविं पुराणमिति च स्मर्तव्यस्य महात्मनः ।
विष्णोः स्वरूपमेवाह वेदाहमिति च प्रभुः ॥ १५३४ ॥

ब्रह्मणः पूर्ववेत्तृत्वादिन्द्रादीनां ततः परम् ।
वेर्त्तृत्वं चाह तमिति वेत्तुः फलमुवाच ह ॥ १५३५ ॥

स्वशिष्यानुग्रहार्थाय स्वकृतस्थापनाय च ।
स्वेष्टदेवस्य सम्प्रीत्यै पद्ये द्वे कृतवान् गुरुः ॥ १५३६ ॥

विश्वसृष्ट्यादिसत्कर्ता सर्वोपास्यो जगद्गुरुः ।
प्रीयतां श्रीमदानन्दतीर्थार्यो नृहरिर्मम ॥ १५३७ ॥

कागलूरकुलाग्रण्यानन्दतीर्थार्यसूनुना ।
कृतो नरहरिप्रीत्यै स्मृतिमाणिक्यसङ्ग्रहः ॥ १५३८ ॥

सन्तः सङ्ग्रहमालोक्य श्लाघयन्त्यनुकम्पया ।
सदाचारस्मृतिरत्नानां महान्तो हि दयालवः ॥ १५३९ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितसदाचारस्मृतेः**
**व्याख्या स्मृतिमाणिक्यसङ्ग्रहरूपा समाप्ता ॥**

*॥ सुप्रीतो भवतु । श्रीकृष्णार्पणमस्तु ॥*

# स्मृतिमाणिक्यसङ्ग्रहग्रन्थोदाहृतमन्त्रखण्डानां समग्रतयोल्लेखः

श्लो.२०२ - याः प्रवतो इत्यस्य मैत्रावरुणिर्वसिष्ठऋषिः । अतिजगती शक्वरी वा । नद्यः देवताः । (ऋ. ७-५०-४)

याः प्रवतो निवर्त उद्वर्त उदन्वतीरनुदकाश्च याः ।
ता अस्मभ्यं पयसा पिन्वमानाः शिवा देवीरशिपदा भवन्तु
सर्वा नद्यो अशिमिदा भवन्तु ॥

श्लो.२०२ - इमं मे गङ्गे इत्यस्य सिन्धुक्षित् प्रैयमेधऋषिः । जगती छन्दः । नद्यः देवताः । (ऋ. १०-७५-५)

इमं मे गङ्गे यमुने सरस्वति शतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयाऽर्जीकीये शृणुह्या सुषोमया ॥

श्लो.२११ - समुद्रज्येष्ठा इत्यस्य मैत्रावरुणिर्वसिष्ठ ऋषिः । आपः देवताः। त्रिष्टुप् छन्दः । (ऋ. ७-४९-१)

समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः ।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥

श्लो. २५१ - सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य अनुष्टुप् छन्दः अन्त्या त्रिष्टुप् । पुरुषनामकनारायणो देवता । अभिषेके विनियोगः । (ऋ. १०.९०.१)

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद् दशाङ्गुलम् ॥ इत्यादि षोडशऋचः ।

श्लो.२७९ - अतो देवेति षड्टचस्य सूक्तस्य काण्वो मेधातिथिः ऋषिः। विष्णुर्देवता। गायत्री छन्दः। *(ऋ. १-२२-१६-२१)*

अतो॑ दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्विचक्र॒मे।
पृ॒थि॒व्याः स॒प्त धाम॑भिः॥ इत्यादि षड्टचः।

श्लो.२७९ - विष्णोर्नुकं इति षड्टचस्य सूक्तस्य औचथ्यो दीर्घतमा ऋषिः। विष्णुर्देवता त्रिष्टुप् छन्दः। *(ऋ. १-१५४-१-६)*

विष्णो॒र्नु कं॑ वी॒र्या॑णि॒ प्र वो॑चं॒ यः पार्थि॑वानि विम॒मे रजां॑सि।
यो अस्क॑भाय॒दुत्त॑रं स॒धस्थं॑ विचक्रमा॒णस्त्रे॒धोरु॑गा॒यः॥

इत्यादि षड्टचः।

श्लो.३९२ - स्योना पृथिवीत्यस्य मेधातिथिः ऋषिः। पृथिवी देवता। गायत्री छन्दः। *(ऋ. १-२२-१५)*

स्यो॒ना पृ॑थिवि भवाऽनृक्ष॒रा नि॒वेश॑नी।
यच्छा॑ नः॒ शर्म॑ स॒प्रथः॑।

श्लो.४१७ -

स॒द्योजा॒तं प्र॑पद्या॒मि स॒द्योजा॒ताय॒ वै नमो॒ नमः॑।
भ॒वेभ॑वे॒नाति॑भवे भवस्व॒ माम्। भ॒वोद्भ॑वाय॒ नमः॑॥

श्लो.४१८ - मानस्तोकेति कुत्सो रुद्रो जगती। *(ऋ. १.११४.८)*

मान॑स्तो॒के तन॑ये॒ मा न आयु॑षि मा नो॒ गोषु॒ मा नो॒ गोषु॒ अश्वे॑षु रीरिषः।
वी॒रान् मा नो॑ रुद्र भमि॒तो व॑धीर्हविष्मन्तः नम॑सा विधेम ते॥

श्लो.५४४ - आपो हिष्ठेति त्र्यृचस्य सूक्तस्य सिन्धुद्वीपः ऋषिः । गायत्री छन्दः । आपो देवताः । मार्जने विनियोगः ।

आपो हिष्ठा मयो भुवः । ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसः । तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वः । यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।

श्लो.५५७ - ऋतं चेत्यस्य सूक्तस्य अघमर्षण ऋषिः । अनुष्टुप् छन्दः । भाववृत्तो देवता । अघमर्षणे विनियोगः । *(ऋ. १०.१९०.१)*

ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत ।
ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥

..................

दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥

श्लो.५६५ - हंसः शुचिषदित्यस्य मन्त्रस्य गौतमो वामदेवः ऋषिः । सूर्यो देवता । जगती छन्दः । *(ऋ. ४-४०-५)*

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

श्लो.५६६ - आकृष्णेनेत्यस्य आङ्गिरसः हिरण्यस्तूपः ऋषिः । सविता देवता । त्रिष्टुप् छन्दः । *(ऋ. १-३५-२)*

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन् ॥

श्लो.६४४ - स्वादिष्टयेत्यस्य वैश्वामित्रो मधुच्छन्दाः ऋषिः। सोमः पवमानो देवता। गायत्री छन्दः। *(ऋ. ९-१-१)*

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।
इन्द्राय पातवे सुतः ॥

श्लो.८०२-

एष ह देवः प्रदिशोऽनु पूर्वो ह जातः स उ गर्भे अन्तः।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः यस्मान्न जात इत्येषः। *(काण्वसंहिता ३.५.२६)*

श्लो.८०८ - *(ऋ. १-२२-१७-२१)*

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूळ्हमस्य पांसुरे ॥

श्लो.८०८ - *(काण्वसं. १८-७९)*

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥

श्लो.८०९ - शुची वो हव्येत्यस्य मैत्रावरुणिर्वसिष्ठः। मरुतः देवताः। त्रिष्टुप् छन्दः।

शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः।
ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ॥

श्लो.८०९ - 'पावमानीयम्' शतं वैखानसाः ऋषयः । पवमानः सोमो देवता । गायत्री छन्दः ।

अग्ने पवस्व स्वपा अग्ने वर्चः सुवीर्यम् ।
दधद्रयिं मयि पोषम् ॥

श्लो.८०९ - काश्यपोऽसितः ऋषिः । पवमानः देवता । गायत्री छन्दः ।

उपास्मै गायता नरः पवमानायेन्दवे ।
अभि देवाँ इयक्षते । (ऋ. ९.११.९)

श्लो.८०९ - तन्तुं तन्वन्नित्यस्य देवाः जगती । *(ऋ. १०-५३-६)*

तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥
शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।
ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ॥

श्लो.८०९ - आदेवानां इत्यस्य आप्त्यस्त्रितः ऋषयः । अग्निर्देवता । त्रिष्टुप् छन्दः । *(ऋ. १०-२-३)*

आ देवानामपि पन्थामगन्म यच्छक्रवाम तदनु प्रवोळ्हुम् ।
अग्निर्विद्वान् त्स यजात् सेदु होता सो अध्वरान् त्स ऋतून् कल्पयाति ॥

श्लो.८१० - वैश्वानरस्य सुमतावित्यस्य आङ्गिरसो कुत्सः, अग्निः वैश्वानरोऽग्निर्वा देवता । त्रिष्टुप् छन्दः । *(ऋ. १-९८-१)*

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण स्वाहा ॥

श्लो.८१०- त्वमग्ने व्रतपा इत्यस्य काण्वो वत्सः, अग्निः, प्रतिष्ठा गायत्री।
(ऋ. ८-११-१)

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः॥

श्लो.८१०- यद्वो वयमित्यस्य आप्त्यस्त्रितः अग्निस्त्रिष्टुप्।(ऋ.१०-२-४)

यद्वौ वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः।
अग्निष्टद्विश्वमा पृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति॥

श्लो.१००५- अग्निनाग्निरित्यस्य मन्त्रस्य मेधातिथिः काण्वऋषिः। अग्निर्देवता। गायत्री छन्दः। दीपप्रज्वालने विनियोगः।
(ऋ. १-१२-६)

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा।
हव्यवाड् जुह्वास्यः॥

श्लो. १०१४ -

ब्रह्मपारं मुने श्रोतुमिच्छामः परमं स्तवम्।
जपता कण्डुना देवो येनाराध्यत केशवः॥

सोम उवाच -

पारः परं विष्णुरपारपारः परः पराणामपि पारपारः।
स ब्रह्मपारः परपारभूतः परः परेभ्यः परमार्थरूपी॥
स कारणं कारणतस्ततोऽपि तस्यापि हेतुः परहेतुहेतुः।
कार्येषु चैवं स हि कर्मकर्तृ(र्ता) रूपैरशेषैरवतीह सर्वम्॥
ब्रह्म प्रभुर्ब्रह्म स सर्वभूतो ब्रह्म प्रजानां पतिरच्युतोऽसौ।
ब्रह्माव्ययं नित्यमजं स विष्णुरपक्षयाद्यैरखिलैरसङ्गी॥

ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तमः ।
तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ॥
एवं वै ब्रह्मपाराख्यं संस्तवं परमं जपन् ।
अवाप परमां सिद्धिं समाराध्य केशवम् ॥ इति जपेत् ।

श्लो.१०१९- येभ्य इत्यस्य गयः प्लातः ऋषिः । विश्वेदेवाः देवताः । जगती छन्दः । मनुष्यगन्धनिवारणे विनियोगः ।

येभ्यो माता मधुमत् पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान् वृषभरान् त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥

श्लो.१०१९- एवापित्रे इत्यस्य मन्त्रस्य वामदेवो गौतमऋषिः । बृहस्पतिः देवता । त्रिष्टुप् छन्दः । अन्तःपटनिबर्हणार्थे विनियोगः ।

*(ऋ. ४-५०-६)*

एवापित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥

श्लो.१०५०- *(ऋ. १०-७१-२)*

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

श्लो.१०५०- *(ऋ. १०-४०-१)*

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥

श्लो.१०५६ -

नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥

श्लो.१०५६- अहं रुद्रेभिरिति अष्टर्चस्य सूक्तस्य वागम्भृणी ऋषिः । परमात्मा देवता । त्रिष्टुप् द्वितीया जगती छन्दः । देवस्य निर्माल्यविसर्जने विनियोगः ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रा वरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ (इत्याद्यष्टऋचः)

श्लो.१०५८- भद्रं कर्णेभिरित्यस्य गोतमो राहूगणः । विश्वेदेवास्त्रिष्टुप् ।
*(ऋ. १-८९-८)*

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

श्लो.१०५९- निषुसीद इत्यस्य वैरूपो नमःप्रभेदनः ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः । प्रार्थने विनियोगः ।

नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत् क्रियते किं चनारे महामर्कं मघवन् चित्रमर्च ॥

श्लो.१०६१-

उत्तमोज्ज्वलकाञ्चनेन रचितम् तुङ्गाङ्गरङ्गस्थलं
शुद्धस्फाटिकभित्तिकाविलसितैः स्तम्भैश्च हेमैः शुभैः ।
मुक्ताजालविलम्बिमण्टपयुतं वज्रैश्च सोपानकैः
नानारत्नविनिर्मितैश्च कलशैरत्यन्तशोभावहम् ॥

श्लो.१०७८-

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्।
मां च पूतं कुरु धरे नतोऽस्मि त्वां धरेश्वरि॥

श्लो.११४२-

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम॥

श्लो.११६१- आप्यायस्व इत्यस्य गोतमो राहूगणऋषिः। सोमो देवता। गायत्री छन्दः। (ऋ. १-९१-१६)

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्।
भवा वाजस्य सङ्गथे॥

श्लो.११६३- दधिक्राव्ण इत्यस्य गौतमो वामदेवऋषिः। दध्यनुष्टुप्। दधिस्नाने विनियोगः। (ऋ. ४-३९-६)

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्॥

श्लो.११६३- घृतं मिमिक्षे इत्यस्य गृत्समदः भार्गवः शौनकवो ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः। (ऋ. २-३-११)

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम।
अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्॥

श्लो.११६३- मधुवाता इत्यस्य गोतमो राहूगणः ऋषिः। विश्वेदेवाः देवताः।
गायत्री छन्दः। (ऋ. १-९०-६-८)

मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥
मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः। मधु द्यौरस्तु नः पिता॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥

श्लो.११६३- स्वादुः पवस्वेत्यस्य भार्गवो वेनऋषिः। सोमः पवमानो देवता। जगती छन्दः। (ऋ. ९-८५-६)

स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः॥

श्लो.११८१- सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण पुरुषोऽनुष्टुप् अन्त्यस्त्रिष्टुप्। (ऋ. १०-९०-१-१६)

श्लो. ११८१- दीर्घतमा औचथ्यः ऋषिः। विष्णुर्देवता। त्रिष्टुप् छन्दः।

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः॥

श्लो.११८१- घर्मा समन्तात् इत्यस्य सध्रिः वैरूपः, घर्मो तापसो वा विश्वेदावास्त्रिष्टुप् चतुर्थी जगती। (ऋ. १०-११४-१-१०)

घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम।
दिवस्पयो दिधिषाणा अवेषन् विदुर्देवाः सहसामानमर्कम्॥

श्लो.११८१- यस्ते मन्यो इत्यस्य तापसः मन्युः, मन्युः आद्यः जगती। ततो नवत्रिष्टुभः ततश्चतस्रो जगत्यश्छन्दांसि।

(ऋ. १०-८३ +८४-७ + ७)

यस्ते॑ म॒न्योऽवि॑धद्वज्र सायक॒ सह॒ ओजः॑ पुष्यति॒ विश्व॑मानु॒षक्।
सा॒ह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा सह॑स्कृतेन॒ सह॑सा॒ सह॑स्वता ॥

श्लो.११८२- समुद्रादूर्मिरित्यस्य एकादशर्चस्य सूक्तस्य गौतमो वामदेवः, अग्निः सूर्यो वा आपो वा गावो वा घृतस्तुतिर्वा देवताः। त्रिष्टुप् एकादशी जगती छन्दः। (ऋ. ४-५८-१ + ११)

स॒मु॒द्रादू॒र्मिर्मधु॑माँ॒ उदा॑र॒दुपां॒शुना॒ सम॑मृत॒त्वमा॑नट्।
घृ॒तस्य॒ नाम॒ गुह्यं॒ यदस्ति॒ जि॒ह्वा दे॒वाना॑म॒मृत॑स्य॒ नाभिः॑ ॥

श्लो.१२०१-

वनस्पत्युद्भवो धूपो गन्धाढ्यो गन्ध उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

श्लो.१२६०-

भो॒जं त्वामि॑न्द्र व॒यं हु॑वेम द॒दिष्ट्वमि॒न्द्रापां॑सि॒ वाजा॑न्।
अ॒वि॒ड्ढी॑न्द्र चि॒त्रया॑ न ऊ॒ती कृ॒धि वृ॑षन्निन्द्र॒ वस्य॑सो नः ॥

श्लो.१२६०-

याः फ॒लिनी॒र्या अ॑फ॒ला अ॑पु॒ष्पा याश्च॑ पु॒ष्पिणीः॑।
बृह॒स्पति॑ प्रसू॒तास्ता नो॑ मुञ्च॒न्त्वंह॑सः ॥

श्लो.१२८६- अर्चत प्रार्चत इत्यस्य आङ्गिरः प्रियमेधः इन्द्रः अनुष्टुप् ।
(ऋ. ८-६९-८)

अर्चत प्रार्चत प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ॥

श्लो.१२९०- परो मात्रयेत्यस्य मैत्रावरुणिर्वसिष्ठः विष्णुस्त्रिष्टुप् ।
(ऋ. ७-९९ + १०० - १ + ०७ + १ + ०७)

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥

श्लो.१२९४- बळित्था तद्वपुषे इत्यस्य औचथ्यो दीर्घतमाः अग्निः जगती ।
(ऋ. १.१४१.१ + ०५)

बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतोजनि ।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥

श्लो.१४१८-

इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ।
महतः परमव्यक्तम् अव्यक्ताद् पुरुषः परः ।
परुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥